न हि चामीकरं मूढ भवेद् भस्म[1] कदाचन ।
प्रकाशे वान्धकारे किं[2] विशेषो नोपलभ्यते[3] ॥
चण्डालयोनिजस्त्वं हि द्विजातिः पुनरप्यहं ।
हीनः श्रेष्ठेन सम्बन्धं मूढ प्राथयसे कथं[4] ॥
चण्डालयोनि[5] भूतस्त्वमहमस्मि[6] द्विजातिजः ।
न हि श्रेष्ठः प्रहीनेन[7] सम्बन्धं कर्तुमिच्छति[8] ॥
श्रेष्ठाः श्रेष्ठैर्हि सम्बन्धं कुर्वन्तीह द्विजातयः[9] ।
विद्यया ये तु सम्पन्नाः संशुद्धाश्चरणेन[10] च ॥
जात्या चैवानभिक्षिप्ता मन्त्रैः परमतां गताः ।
[11]अध्यापका मन्त्रधरास्त्रिषु[11] वेदेषु पारगाः ॥
[12]निघण्टकैटभान् वेदान् ब्राह्मणा ये ह्यधीयते ।
तैस्तादृशैर्हि सम्बन्धं कुर्वन्तीह द्विजातयः ॥
न हि श्रेष्ठो हि[13] हीनेन सम्बन्धं कर्तुमिच्छति ।
प्रार्थयसेऽप्रार्थनीयां[14] वायुं पाशेन बन्धितुं[15] ॥
यदस्माभिश्च[16] सम्बन्धमिह त्वं कर्तुमिच्छसि[17] ।
जुगुप्सितः[18] सर्वलोके कृपणः[19] पुरुषाधमः ।
गच्छ[20] त्वं वृषल क्षिप्रं किमस्मानवमन्यसे[21] ॥

---

1 Mss भस्मीभवति । 2 Mss वा । 2-3 Mss -षो न कथमुपलभ्यते । Ch[2] has a reading with similar ideas. Ch[1] differs. 4 Ch[2] agrees with Skt. 5 P संभूत- । 6 P -हमग्रोऽस्मि । 7 P omits प्र । 8 Ch[2] agrees. 9 Tib & Ch[2] add निकृष्टैः सह सम्बन्धं श्रेष्ठैः कर्तुं न चेष्यते । 10 Tib omits चरण । 11 Tib *sṅags. mchog. las. byuṅ shiṅ.* Mss स्तीर्णा for त्रिषु ( Ch[2] त्रिषु ) । 12 P सनिघं- । 13 P omits. 14 Mss अप्रार्थनीयं प्रार्थयसे । 15 Tib adds आरभसे । 16 Mss यदि । Tib यद् ( *gaṅ. phyir* ) । 17 Mss यस्त्वं कर्तुमिहेच्छसि । Ch[2] agrees almost word for word with all the above verses. Ch[1] agrees only in the sense. 18 Tib *ro. daṅ. rigs. dman.* 19 Tib अशुचि । 20 B यश्व, P तस्य ( Tib & Chinese translations गच्छ ) । 21 Tib किमेवं मन्यसे । Ch[1] "So that outsiders may not hear this strange talk !" Ch[2] "We cannot have such relationship."

चण्डालाः सह चण्डालैः पुक्कशाः[1] सह पुक्कशैः ।
कुर्वन्तीहैव[2] सम्बन्धं जातिभिर्जातिरेव[3] च ॥
ब्राह्मणा ब्राह्मणैः सार्धं क्षत्रियाः क्षत्रियैः सह ।
सार्धं वैश्यास्तथा वैश्यैः शूद्राः शूद्रैस्तथा सह ॥
सदृशाः सदृशैः सार्धमावहन्ति परस्परं ।
न हि कुर्वन्ति चण्डालाः सम्बन्धं ब्राह्मणैः सह ॥
सर्वजातिविहीनोऽसि सर्ववर्णजुगुप्सितः[4] ।
कथं हीनश्च श्रेष्ठेन[5] सम्बन्धं कर्तुमिच्छसि[6] ॥

इदं पुनर्वचनं श्रुत्वा ब्राह्मणस्य पुष्करसारिणस्त्रिशङ्कुर्मातङ्गराज इदमवोचत् ।

यथा भस्मनि सौवर्णे विशेष उपलभ्यते ।
ब्राह्मणे वान्यजातौ वा न विशेषोऽस्ति वै तथा[7] ॥
यथा प्रकाशतमसोर्विशेष उपलभ्यते ।
ब्राह्मणे वान्यजातौ वा न विशेषोऽस्ति वै तथा[8] ॥
न हि ब्राह्मण आकाशान् मरुतो वा समुत्थितः[9] ।
भित्वा वा पृथिवीं जातो जातवेदा यथारणेः[10] ॥
ब्राह्मणा योनितो जाताश्चण्डाला अपि योनितः ।
श्रेष्ठत्वे वृषलत्वे च किं वा पश्यसि कारणं[11] ॥
ब्राह्मणोऽपि मृतोत्सृष्टो जुगुप्स्योऽशुचिरुच्यते ।
वर्णास्तथैव चाप्यन्ये का नु तत्र विशेषता[12] ॥

---

1 Tib *dur. bsruṅs* ( श्मशान-रक्षक ) । 2 P omits एव । 3 P simply जातिस्तथा । Ch[2] omits this verse. Ch[1] "You may make such proposal to your own people !" 4 Tib omits. 5 P हीनः प्रश्रे- । 6 Ch omit all these verses. 7 Tib विशेषो नोपलभ्यते । 8 Ch[1] omits this verse. Tib विशेषो नोप- । 9 Tib समुद्राद् for मरुतो । 10 Ch[1] न हि ब्राह्मणा आकाशाच् चण्डाला नापि भूमितः ; it omits the next line. Ch[2] omits मरुतो वा and it reads "You are not born from the Vedas" for जातवेदा- ! 11 Tib *mchog. ñid. daṅ. dman. ñid. du. bram. ze. rnams.* *la. ci. dmigs* ( Narthang : *mi. dmigs* ). 12 Ch[1] "If you say that there is difference between the high and the low, why then there is no difference in their births & deaths ?"

[1]यत्किञ्चित्पापकं कर्म किल्विषं कलिरेव च ।
सत्त्वानामुपघाताय ब्राह्मणैस्तत्प्रकाशितं ॥
इति कर्माणि चैतानि[2] प्रकाशितानि ब्राह्मणैः[3] ।
कर्मभिर्दारुणैश्चापि "पुण्योऽहं" ब्रुवते द्विजाः[4] ॥
मांसं खादितुकामैस्तु ब्राह्मणैरुपकल्पितं ।
मन्त्रैर्हि प्रोक्षिताः सन्तः स्वर्गं गच्छन्त्यजैडकाः ॥
यद्येष मार्गः स्वर्गाय कस्मान्न ब्राह्मणा ह्यमो ।
आत्मानमथवा बन्धून्मन्त्रैः संप्रोक्षयन्ति वै ॥
मातरं पितरं चैव भ्रातरं भगिनीं तथा ।
पुत्रं दुहितरं भार्यां द्विजा न[5] प्रोक्षयन्त्यमी ॥
मित्रं ज्ञातिं सखीं[6] वापि ये वा विषयवासिनः ।
प्रोक्षितास्तेऽपि वा[7] मन्त्रैः सर्वे यास्यन्ति सद्गतिं[8] ॥
सर्वे यज्ञैः समाहुता[9] गमिष्यन्ति सतां गतिं ।
पशुभिः किं नु भो यष्टैरात्मानं किं न यक्ष्यसे[10] ॥
न प्रोक्षणैर्न मन्त्रैश्च स्वर्गं गच्छन्त्यजैडकाः[11] ।
न ह्येष मार्गः स्वर्गाय मिथ्याप्रोक्षण[12]मुच्यते ॥
ब्राह्मणै रौद्रचित्तैस्तु पर्यायो[13] ह्येष चिन्तितः ।
मांसं खादितुकामैस्तु[14] प्रोक्षणं कल्पितं पशोः ॥
अन्यच्चाहं प्रवक्ष्यामि ब्राह्मणैर्यत् प्रकल्पितं ।
पातका हि समाख्याता ब्राह्मणेषु[15] चतुर्विधाः[15] ॥

---

1 Ch[1] adds : "You may think that the Caṇḍālas have evil practices, they have no compassion, they are cruel and murderous, hence they are called 'low'; but I should say :" 2 प्रैतानि ? Tib *ro. lans. kyi. las.* =पैशाचिकानि कर्माणि। 3 Mss ब्राह्मणैस्तत्प्रकाशिताः। 4 Tib अशुभेष्वपि कर्मसु पुण्यमस्ति- । 5 P चान्ये। Tib omits. 6 Tib omits. 7 P -श्चापि ते। 8 Tib स्वर्गं। It adds : हे रौद्राः, कथं ते न प्रेष्यन्ते। 9 Tib omits यज्ञैः and reads युगपद् for समा-। 10 Mss यो-। 11 Tib एडकानां सद्गतये स्वर्गाय वा प्रोक्षणं न कर्तव्यं। 12 Tib विधि, विधान। 13 Tib adds *du. mas. thabs.* नाना उपाय। 14 P हि। 15 Tib चतुर्वेदे।

सुवर्णचौर्यं मद्यं च गुरुदाराभिमर्दनं ।
ब्रह्मघ्नता[1] च चत्वारः पातका ब्राह्मणेष्वमी ॥
सुवर्णहरणं वर्ज्यं स्तेयमन्यन्न विद्यते[2] ।
सुवर्णं यो हरेद्विप्रः स तेनाऽब्राह्मणो भवेत् ॥
सुरापानं न पातव्यमन्यपानं यथेष्टतः ।
सुरां तु यः पिबेद्विप्रः स तेनाब्राह्मणो भवेत् ॥
गुरुदारा न गन्तव्या अन्यदारा यथेष्टतः ।
गुरुदारां तु यो गच्छेत्स तेनाब्राह्मणो भवेत् ॥
न हन्याद् ब्राह्मणं ह्येकं हन्यादन्याननेकशः ।
हन्यात्तु ब्राह्मणं यो वै स [3]तेनाब्राह्मणो भवेत्[4] ॥
इत्येते पातका ह्युक्ता ब्राह्मणेषु चतुर्विधाः ।
[5]भवन्त्यब्राह्मणा येन[6] ततो[7] ऽन्येऽपातकाः स्मृताः[8] ॥

कृत्वा चतुर्णामेकैकं भवेदब्राह्मणस्तु सः ।
लभते न च सामीचीं[9] ब्राह्मणानां समागमे ।
आसनं चोदकं चैव व्युत्थानं स[10] न चार्हति ॥
तस्य निःसरणं दृष्टं ब्राह्मणैः पतितस्य तु ।
व्रतं वै स समादाय पुनर्ब्राह्मणतां व्रजेत् ॥
असौ द्वादशवर्षाणि धारयित्वा खराजिनं ।
खट्वाङ्गमुच्छ्रितं कृत्वा मृतशीर्षे च भोजनं[11] ॥

---

1 Tib *sdom. pa'i. tshogs.* for ब्रह्म । 2 Tib reads अन्यत्पापं न विद्यते । 3-4 P omits. 5-6 Tib omits. 7-8 Ch² omits. 9 Mss -चीं, Tib सामीचीं । Ch² "He cannot participate in public functions. He can not carry on a debate or discourse in a social gathering. He can not get offerings." Ch¹ omits all these. 10 Mss च । 11 Ch¹ "खट्वाङ्गी चीरवासा वा ( Vide *Manu* xi. 105 ) and hanging a skeleton on one's head." Ch² omits खट्वाङ्ग...and reads : "He should observe five vows. He should eat and drink from a deer's head ( it mistook *mṛga* for *mṛta* ) !"

एतद् व्रतं[1] समादाय निश्चयेन निरन्तरं ।
पूर्णे द्वादशमे वर्षे पुनर्ब्राह्मणतां व्रजेत् ॥
इति निःसरणं दृष्टं ब्राह्मणैस्तु तपस्विभिः ।
कुमार्गगामिभिर्मूढैरनिःसरणदर्शिभिः[2] ॥

तदिदं ब्राह्मण ते ब्रवीमि, संज्ञामात्रकमिदं लोकस्य यदिदमुच्यते ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा। सर्वमिदमेकमेवेति विज्ञाय पुत्राय मे शार्दूलकर्णाय प्रकृतिं माणविकामनुप्रयच्छ भार्यार्थाय। यावन्तं कुल[3] शुल्कं मन्यसे तावन्तमनुप्रदास्यामि। इदं च खलु पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारो अभिषक्तः[4] कुपितश्चण्डोभूतोऽनात्तमनाः कोपं[5] च द्वेषं च तत्प्रत्ययं[6] जनयित्वा[7] ललाटे त्रिशिखां भृकुटिं कृत्वा कण्ठं

---

1 Tib तपः। 2 Tib *'byuṅ* [ *dbyuṅ. pa* ] *ba. med. par. bstan. par. bya*. Ch[1] reads : "Such is your foolishness ! You follow a wrong path and from your arrogance think that you alone are right." Ch[2] reads : "The Brāhmaṇas follow a way which is not right or safe, which is dangerous." After this it cites an interesting example as follows : "There were some people who used to boast that they were Chinese ! That they were the best. They thought that their race was the noblest and so they despised others calling them barbarians ! According to them others were all dirty, low and mean ! They (the Chinese) refused to have any matrimonial relationship with others. To fight with them they engaged armies. And because of this self-importance and extreme pride, they were persecuted by enemies, and were ruined. They lived in an obscure country, yet they regarded it as the middle (gem) of the world ! When afterwards, they got acquainted with the Buddhist religion they came to know Mankind !" 3 Tib omits. Ch[1] omits this sentence. Ch[2] omits this sentence and the preceding ones. 4 Tib omits it and adds भृशं। 5 Tib omits. 6 Tib द्वेषेण तत्प्रत्ययेन। 7 Tib omits.

धमयित्वाऽक्षिणी परिवर्त्य नकुलपिङ्गलां दृष्टिमुत्पाद्य त्रिशङ्कुं मातङ्गराजमिदमवोचत् ।

असमीक्ष्यैतत्त्वया हि[1] कृता संज्ञेयमीदृशी ।
एकैव जातिर्लोकेऽस्मिन्सामान्या न पृथग्विधा[2] ॥
कथं श्वपाकजातीयो ब्राह्मणं वेदपारगं ।
निहीनयोनिजो भूत्वा विमर्दितुमिहेच्छसि[3] ॥

राजानः खलु वृषल प्रति[वि]भागज्ञा भवन्ति । तद्यथा देशधर्मे वा नगरधर्मे वा ग्रामधर्मे वा निगमधम वा शुल्कधर्मे वा आवाहधर्मे वा विवाहधर्मे वा पूर्वकर्मसु वा[4] । चत्वार इमे वृषल वर्णाः । यदुत ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । तेषां विवाहधर्मेषु चतस्रो भार्या ब्राह्मणस्य भवन्ति । तद्यथा ब्राह्मणी क्षत्रिया वैश्या शूद्री चेति । तिस्रः क्षत्रियस्य भार्या भवन्ति । क्षत्रिया वैश्या शूद्री चेति । वैश्यस्य द्वे भार्ये भवतः । वैश्या शूद्री चेति । शूद्रस्य त्वेका भार्या भवति शूद्री एव । एवं ब्राह्मणस्य वृषल चत्वारः पुत्रा भवन्ति । तद्यथा ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति[5] । क्षत्रियस्य त्रयः पुत्राः, क्षत्रियो वैश्यः शूद्र इति । वैश्यस्य द्वौ पुत्रौ, वैश्यः शूद्र इति । शूद्रस्य त्वेक एव पुत्रो भवति यदुत शूद्र एव[6] ।

ते ब्राह्मणाः पुन[7] वृषल ब्रह्मणः[8] पुत्राः । औरसा मुखतो जाताः । उरस्तो बाहुतः[9] क्षत्रियाः । नाभितो वैश्याः । पद्भ्यां शूद्राः ।

ब्रह्मणायं[10] खलु वृषल लोकः[11] सर्वभूतानि निर्मितानि ।

---

1 Mss read वृषल for हि । 2 Ch[1] omits the 2nd line and Ch[2] omits the whole verse. 3 Ch[1] omits this verse. 4 Tib पूर्वकर्मधर्मेषु ; then it adds wrongly *mi* ( *ni* ? ) *ses* ! 5 Tib ब्राह्मणीजः क्षत्रियाजः etc. Ch[1] omits this sentence and the preceding one. 6 Ch[1] omits these sentences. 7 Tib omits ब्राह्मणाः पुनः । 8 Mss & Tib ब्राह्मण- । Ch[2] "Real son of the god Brahmā." Ch[1] omits this sentence and the following ones including the verse. 9 Tib omits. 10 Tib ब्राह्मणैः । Mss omit अयं । 11 Mss read -के ।

तस्य ज्येष्ठा[1] वयं पुत्राः[2] क्षत्रियास्तदनन्तरं ।
वैश्यास्तृतीयका वर्णाः शूद्रनाम्ना[3] चतुर्थकः ॥ इति ॥

स त्वं वृषल चतुर्थेऽपि वर्णे न संदृश्यसे। अहं चाग्रे वर्णे श्रेष्ठे वर्णे परमे वर्णे प्रवरे वर्णे। परमार्थं च संयोगमाकाङ्क्षसि प्रणश्य[4] त्वं वृषल क्षिप्रं। मा चास्माकमवमंस्थाः[5] ।

इदं पुनर्वचनं श्रुत्वा ब्राह्मणस्य पुष्करसारिणस्त्रिशङ्कुर्मातङ्गराज इदमवोचत्। इदमत्र ब्राह्मण श्रृणु यद् ब्रवीमि[6] । ब्रह्मणायं लोकः, सर्वभूतानि निर्मितानि[7] ।

तस्य ज्येष्ठा वयं पुत्राः[8] क्षत्रियास्तदनन्तरं।
वैश्यास्तृतीयका वर्णाः शूद्रनाम्ना चतुर्थकः[9] ॥ इति ॥

सपादजङ्घाः सनखाः[10] समांसाः[10] सपार्श्वपृष्ठाश्च[11] नरा भवन्ति ।
एकांशतो नास्ति यतो विशेषो[12] वर्णाश्च चत्वार इतो[13] न सन्ति[14] ॥
अथो विशेषः प्रवरोऽस्ति कश्चित्तद् ब्रूहि यद्यानुमतं[15] यथा ते[15] ।
अथो विशेषः प्रवरो[15] हि नास्ति वर्णाश्च चत्वार इतो[16] न सन्ति[17] ॥

---

1 Tib omits. 2 Tib reads जाताः for पुत्राः । 3 P -द्रो नाम। 4-5 Tib जघन्यस्त्वं वृषल अस्मत्सकाशादपेहि । Ch¹ "You are not included even in the fourth class. Yet you say there is no difference! You speak against the teachings of the sages! You wish to trouble me, go away at once! Speak no more!" Ch² "You are not included even into the fourth caste yet you call yourself a Bhikṣu! You fool! You dream of an impossible thing!" B omits प्रणश्य । P reads प्रणाश । B reads अव -स्थाः and P अवयोस्थाः for अवमंस्थाः। 6 Tib omits. 7 Tib त्वया (for ब्रह्मणा) अयं सर्वलोको निर्मितः । Ch² omits this sentence and the preceding one. 8 Tib जाताः for पुत्राः । 9 Ch² omits this verse. Ch¹ reads only this (instead of the verse): "Only Brāhmaṇas are born from the mouth of Brahmā, so they are the best!" 10 Tib सबाहुपञ्जराः । 11 Tib -देशाश्च । 12 Tib किं विशेषोऽस्ति ? 13 B अतो । 14 Tib सिद्ध्यन्ति । 15 Tib omits. 16 B अतो । 17 Tib सिद्ध्यन्ति ।

यथा हि दारका बालाः क्रीडमाना महापथे ।
पांशुपुञ्जानि संपिण्ड्य स्वयं नामानि कुर्वते ॥
इदं क्षीरमिदं दधि इदं मांसमिदं घृतं ।
न च बालस्य वचनात्पांशवोऽन्नं भवन्ति हि[1] ॥
वर्णास्तथैव चत्वारो यथा ब्राह्मण भाषसे[2] ।
पांशुपुञ्जाभिधानेन योगो [यः को] प्येष न विद्यते[3] ॥
न केशेन न कर्णाभ्यां न शीर्षेण न चक्षुषा ।
न मुखेन न नासया[4] न ग्रीवया न बाहुना ॥
नोरसाप्यथ पार्श्वाभ्यां न पृष्ठेनोदरेण च ।
नोरुभ्यामथ जङ्घाभ्यां पाणिपादनखेन[5] च ॥
न स्वरेण[6] न वर्णेन न सर्वांशै[7] न मैथुनैः[7] ।
नानाविशेषः सर्वेषु मनुष्येषु हि[8] विद्यते ॥
यथा हि जातिष्वन्यासु लिङ्गं योनिः[9] पृथक् पृथक् ।
सामान्यं कारणं तत्र किं वा जातिषु मन्यसे[10] ॥

सशीर्षकाश्चाथ नरास्थियुक्ताः[11] सचर्मकाः सेन्द्रियसोदराश्च ।
एकांशतो नास्ति यतो विशेषो वर्णा न युक्ताश्चतुरोऽभिधातुं ॥
अथास्ति कश्चित्प्रवरो विशेषस्तद् ब्रूहि यच्चानुमतं यथा ते ।
अथो विशेषः प्रवरोऽत्र नास्ति वर्णा न युक्ताश्चतुरोभिधातुं[12] ॥

---

1 Tib reads the 4th *pāda* lit. तानि क्षीरादीनि चत्वारि भवन्ति । 2 Tib omits this line. 3 Tib पांशुपुञ्जस्य योगभेदज्ञानवत् । Ch[2] omits these three verses. Ch[1] reads them. 4 B नासायां, P नासाया । 5 Tib omits नख । 6 Tib रूपेण । 7 Tib reads : *gnas. dan 'dod. pa. sbyor. bas.* ( *spyod. pas.* ) *min.* 8 Mss न । Tib omits it. 9 Mss जातिः । 10 Tib has got different readings: *de ltar ran. gi. bsod. nams. rigs* । *skyes. pa. bud. med. mtshan. mas. phyi* । *rkan pa. lag. pa. 'thun. pa. na...* 11 Tib सोरसः । 12 Tib चत्वारो वर्णाः केनाभिधीयन्ते । In the Chinese translations only the substance of the above verses is given.

दोषो ह्ययं चात्र[1] भवेदयुक्तो यद्यत्त्वया चाभिहितं[2] निदाने ।
श्रुत्वा तु मत्तः प्रतिपद्य सौम्य यच्चात्र मन्ये शृणु चोद्यमानं[3] ॥
यच्चात्र युक्तं विषमं समं वा तत्ते प्रवक्ष्यामि नियुज्यमानः[4] ।
दोषो हि यश्चापि[5] भवेदयुक्तो वक्ष्यामि ते ह्युत्तरतोत्तरं च[6] ।
श्रुत्वा तु मत्तः प्रतिपद्य सौम्य कर्माधिपत्यप्रभवा मनुष्याः[7] ॥

अनुमानमपि[8] ते ब्राह्मण यदि प्रमाणं, तत्र[9] यद् ब्रवीषि ब्रह्मा[10] एक इति तस्मात्प्रजा[11] अपि एकजात्या एव[12] । वयमप्येकजात्या भवामः । यच्च ब्रवीषि ब्रह्मणायं लोकः सर्वभूतानि च निर्मितानीति । स चेत्ते ब्राह्मण इदं प्रमाणं, तदिदं ते ब्राह्मण अयुक्तं यद् ब्रवीषि चत्वारो वर्णा ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चेति[13] ।

अपि तु ब्राह्मण मिथ्या मम वचो भवेत्[14] यदि ब्राह्मण संवादेन[15] मनुष्यजातेर्नानाकरणं प्रज्ञायते[16] । यदुत शीर्षतो वा मुखतो वा [17]कर्णतो वा नासिकातो वा

---

1 Mss अयमत्र दोषोहि । 2 Mss omit च । 3 P उक्तं तु ते सौम्य गुणे निदानं । Tib reads : एवंरूपो दोषोऽस्ति यदा त्वया एवंरूपमयुक्तमभिहितं । हे सौम्य मत्तः पुनरपि शृणु । तथा च परमं सुभाषितं परमं धर्मनिदानं चोद्यमानं श्रुत्वा युक्तं वाऽयुक्तं वा वद । 4 Mss -नं । P adds here : श्रुत्वा तु मत्तः प्रतिपद्य सौम्य यच्चात्र मन्ये शृणु चोद्यमानं । 5 B omits यश्चापि । P reads यच्चापि दोषोहि । 6 Mss -त्तराणि । 7 Mss read : धर्माधिपत्याः प्रवरा- । Tib reads : मनुष्येषु प्रवरो धर्मविशेषो नास्ति । As the reading of the Mss does not give any clear idea, we have adopted a reading which is similar in letters to that of the Mss and also gives a clear idea. Verses with such ideas are found in Ch[2] . Ch[1] omits these. 8 P अनुजानामि । 9 Tib adds संविभागे । 10 Mss ब्राह्मण एकजात्य । Tib ब्राह्मणाः । Ch[2] "Brahmā has only one body from which only one kind ( of human beings ) or one caste may be originated". 11 Mss प्रजापतिः (Tib प्रजा) । 12 Mss -जात्यः । Tib adds एव which is not in Mss. 13 Tib adds एतेषां ब्रह्मा कारणं न भवेत् । 14 Tib omits this sentence. 15 Tib संविभागे । 16 Tib *sna. chogs. pa'i. rgyu 'dus. pa. yin. te* ( नानाकारणसंनिपातोऽस्ति ) । 17 Tib adds नेत्रतो वा ।

भ्रूतो[1] वा रूपतो वा संस्थानतो वा वर्णतो[2] वाऽऽकारतो वा योनितो वाऽऽहारतो वा सम्भवतो वा नानाकरणं प्रज्ञायते।

तद्यथापि भोः पुष्करसारिन् गवाश्वगर्दभो[3] ष्ट्रमृगपक्ष्यजैडकानामण्डज[4]-जरायुजसंस्वेदजौपपादुकानां नानाकरणं प्रज्ञायते। यदुत पादतोऽपि मुखतोपि वर्णतोऽपि संस्थानतोऽपि आहारतोऽपि योनिसम्भवतोऽपि[5] नानाकरणं प्रज्ञायते। नचैवं तेषां चतुर्णां वर्णानां नानाकरणं प्रज्ञायते। तत्तस्मात्सर्वमिदमेकमिति।

अपि च। ब्राह्मणामीषां फल्गुवृक्षाणामाम्रातकजम्बुखर्जूरपनसदालावन[6] तिन्दुकमृद्वीकबीजपूरककपित्थाक्षोडनारिकेलतिनिश[7] करञ्जादीनां नानाकरणं प्रज्ञायते। यदुत मूलतश्च स्कन्धतश्च त्वग्भागतश्च सारतश्च पत्रतश्च पुष्पतश्च फलतश्च नानाकरणं प्रज्ञायते[8]। न चैवं चतुर्णां वर्णानां नानाकरणं प्रज्ञायते[9]।

तद्यथा ब्राह्मणामीषां स्थलजानां वृक्षाणां सारतमालनक्तमालकर्णिकार-सप्तपर्णशिरीषकोविदारस्यन्दनचन्दनशिंशपैरण्डखदिरादीनां नानाकरणं प्रज्ञायते। यदुत मूलतश्च स्कन्धतश्च त्वग्भागतश्च गुल्मतश्च[10] सारतश्च पत्रतश्च पुष्पतश्च फलतश्च विशेष उपलभ्यते[11]। न चैवं चतुर्णां वर्णानां नानाकरणं प्रज्ञायते।

तद्यथा भोः पुष्करसारिन्नमीषां क्षीरवृक्षाणामुदुम्बरप्लक्षाश्वत्थन्यग्रोधवल्गु[12]-केत्येवमादीनां नानाकरणं प्रज्ञायते। यदुत मूलतश्च स्कन्धतश्च[13] त्वग्भागतश्च[14] सारतश्च पत्रतश्च पुष्पतश्च फलतश्च नानाकरणं प्रज्ञायते। न त्वेव चतुर्णां वर्णानां नानाकरणं प्रज्ञायते।

तद्यथा पुष्करसारिन्नमीषामपि फलभैषज्यवृक्षाणामामलकीहरीतकी-विभीतकी [15]फरसकादीनामन्यासामपि विविधानामोषधीनां ग्रामजानां[16] पार्वतीयानां[17] तृणवनस्पतीनां[18] नानाकरणं प्रज्ञायते। यदुत मूलतश्च स्कन्धतश्च

---

1 Tib मुखतो। 2 Tib omits. 3 Tib adds श्वन्। 4 Mss omit अण्डज, it is found in Tib & Ch². 5 Tib योनितोऽपि। 6 ? Tib *pha. le. pa.* or *ba. le. pa.* 7 Mss -स-। 8 Tib adds : *'bras. bu. med. pa'i. me. tog. rnams. sna. tshogs. par. rig. par. by' o.* 9 Tib भवति। 10 Mss फल्गुतश्च। 11 Tib lit. नानाकरणं प्रज्ञायते। 12 Mss omit क। 13 Mss गन्धतश्च। 14 Mss omit (Tib has it). 15 For फलस। 16 Tib lit. कृषिजा-। 17 Tib omits. 18 Tib -वनजानां।

गुल्मतश्च सारतश्च पत्रतश्च पुष्पतश्च फलतश्च नानाकरणं प्रज्ञायते[1] । न त्वेव चतुर्णां वर्णानां नानाकरणं प्रज्ञायते ।

तद्यथा स्थलजानां पुष्पवृक्षाणामतिमुक्तकचम्पकपाटलानां सुमनावार्षिका-धनुष्कारिकादीनां नानाकरणं प्रज्ञायते । यदुतो रूपतोऽपि वर्णतोऽपि गन्धतोऽपि संस्थानतोऽपि नानाकरणं प्रज्ञायते । न त्वेव चतुर्णां वर्णानां नानाकरणं प्रज्ञायते[2] ।

तद्यथा ब्राह्मणामीषामपि जलजानां पुष्पाणां पद्मोत्पल[3] सौगन्धिक-मृदुगन्धिकादीनां नानाकरणं प्रज्ञायते । यदुत रूपतश्च गन्धतश्च संस्थानतश्च वर्णतश्च नानाकरणं प्रज्ञायते । नत्वेव चतुर्णां वर्णानां नानाकरणं प्रज्ञायते । तद्यथा पुष्करसारिन् अमी ब्राह्मणा इति क्षत्रिया इति वैश्या इति शूद्रा इति । तस्मादेकमेवेदं सर्वमिति[4] ।

अप्यन्यत्ते प्रवक्ष्यामि ब्राह्मणैः कल्पितं यथा ।
शिरः सतारं गगनमाकाशमुदरं[5] तथा ॥
पर्वताश्चाप्युभावूरू पादौ च धरणीतलं ।
सूर्याचन्द्रमसौ नेत्रे रोम तृणवनस्पती ॥
अश्रूण्यवोऽवद्वर्षाऽस्य नद्यः प्रस्रावमेव च ।
सागराश्चाप्यमेध्यं वै एवं ब्रह्मा प्रजापतिः[6] ॥

---

1, 2 Tib omits these two sentences. All these prose passages are found in Ch[2] though not in detail. Ch[1] omits all except the passage containing the illustration of the flower-trees. 3 Tib adds कुमुद । 4 Both the Chinese translations have only the substance of the illustrations. 5 Tib translates it wrongly : *lto. ba ni. ri. rnams. yin. no* । *brla. gñis. dan. rkan. pa. gñis. ni. s'o* । उदरं पर्वताः, उभौ ऊरू पादौ च धरणीतलं । 6 Ch[1] reads : "Rivers are His tears, the mountains are His bones !" The rest is the same as the Skt. text. Ch[2] omits this verse.

परीक्षस्व त्वं ब्रह्मणः[1] स्वलक्षणं। यस्माद् ब्रह्मणो ब्राह्मणा उत्पन्नास्तस्मात्क्षत्रिया अपि वैश्या अपि शूद्रा अप्युत्पन्नाः[2] ।

[3]एवं प्रसूतिर्यदि तत्त्वतः स्यात्ततो हि स्याद्वर्णकृतो विशेषः।
यदि ब्राह्मणा ब्रह्मलोकं व्रजेयुस्त्रयश्च वर्णा न व्रजेयुः [4]स्वर्गं ।
एवं भवेद्वर्णकृतो विशेषो न[5] चेन्न चत्वारो[6] भवन्ति वर्णाः[7] ॥
यस्माद्धि वर्णश्चतुर्थ एवं[8] प्रयाति स्वर्गं स्वकृतेन[9] कर्मणा।
[10]यतस्तपश्चार्षमिह प्रशस्तं तस्माद् द्विजातेर्न विशेषणं स्याद् ॥
यदि ब्राह्मणः स्यादिहैक एव द्विजिह्व[11]श्चतुःश्रवणस्तथैव[12] ।
चतुर्विषाणो बहुपाद् द्विशीर्ष[13] एवं कृते वर्णकृतो विशेषः[14] ॥

---

1 Mss ब्राह्मण। Mss -लक्षणतः। 2 For this, Mss read : देवता ब्राह्मणतां व्रजेयुः। क्षत्रियाश्च यक्षाः वैश्याश्च नागाः असुराश्च शूद्राः which are not found in Tibetan translation. Tib reads this whole passage as follows : ब्रह्मणः स्वलक्षणमेवं भवति, जानासि किम् ? स्वयं त्वं परीक्षस्व। यस्माद् ब्रह्मणो ब्राह्मणा etc. etc. We have adopted here the Tib reading, as it is in accordance with the context. 3 Mss add here the following : एवं प्रसूतिर्यदि तत्त्वतः स्यादेवं भवेद्वर्णः कुतः स्याद् (स्मद्) विशेषः। यैर्ब्राह्मणा ब्राह्मणा भवेयुः। क्षत्रियाः क्षत्रिया भवेयुः। वैश्या वैश्या भवेयुः शूद्रा (अपि) शूद्रा (एव) भवेयुः (स्युः)। All these are omitted in Tibetan translations. 4 Mss add इह। 5-6 Mss चत्वार एव न। 7 Tib : न चेद् भवेद्वर्णचतुष्को नैव। 8 Mss एव। 9 Tib सु-। 10 Mss तद्वत्। 11 Mss -ह्वाऽस्य चतु-। 12 B adds च। Tib द्विलिङ्ग for चतुःश्रवणः। 13 Mss -पादो द्वि-। Tib omits बहुपाद्। 14 Ch[1] reads after "एवं ब्रह्मा प्रजापतिः" : "All these are lies preached by you Brāhmaṇas. The world is created by *karman* of the sentient beings. How could the Brahmā creat it ? You are ignorant ! Because of your wrong conceptions, you say that you are the best which none believe ! You Brāhmaṇas say that after death, you alone are born in heaven not others ! Therefore, you are the best. But according to your scriptures, whoever perform good actions are born in heaven. If the performance of good actions is the cause of the birth in heaven, then all who perform good actions can be born in heaven. Why then others should be inferior to you ?" 1-14 Ch[2] omits.

रागैश्च[1] नाम परघातनं[2] च एवं प्रकारं च विहेठनं[3] च ।
सत्त्वस्य वै[4] कर्मणो ध्वंसनं[5] च एतान्यकल्याणकृतानि विप्रैः[6] ॥
युद्धं विवादं कलहान्यभीक्ष्णं[7] गोप्रोक्षणं चिन्तितं ब्राह्मणैर्हि ।
अथर्वणः कर्मणा[8] त्रासनं च एतानि मन्त्राणि कृतानि विप्रैः ॥
पापेच्छता बहुजनवञ्चनं च शाठ्यं च धौर्त्यं[9] च तथैव कल्पं[10] ।
एवं परेषामहितं विचिन्त्य कदा च ते स्वर्गमितो व्रजेयुः[11] ॥
ये ब्राह्मणा उग्रतपा विनीता व्रतेन शीलेन सदा ह्य पेताः ।
अहिंसका ये दम[12] संयमे[13] रतास्ते ब्राह्मणा ब्रह्मपुरं व्रजन्ति[14] ॥
सहास्थिमांसः[15] सनखः[16] सचर्मा[17] दुःखं सुखं मूत्रपुरीषमेकं ।
[18]पञ्चेन्द्रियैर्नास्ति यतो विशेष[19]स्तस्मान्न वै वर्णचतुष्क एषः ॥

तद्यथा[20] नाम ब्राह्मण कस्यचित्पुरुषस्य चत्वारः पुत्रा भवेयुः । स तेषां नामानि कुर्यात् नन्दक इति वा जीवक इति वा अशोक इति वा शतायुरिति वा । इष्टाश्च[21]

---

1 Mss -गश्च । Tib *chags. pas. phyin. nas.* 2, 3 Mss -कः । 4 Mss -त्वानां । 5 Mss -कः । 6 Tib विप्राणामकल्याणमित्राणि । 7 Tib *pha. dan. yan.* 8 Mss अथर्वणं कर्मणः । 9 Tib तीव्रं (*mi. ẓad. pa.*). 10 Tib *rñog. pa.* कलङ्क, कलुष (to trouble). 11 Tib ततस्ते स्वर्गमितो गन्तुमिच्छेयुः । स्वर्गस्य मार्ग एष न भवति । 12 Tib शमे । 13 Tib omits. 14 Tib -रे जायन्ते । 15 Mss -साः । 16 Mss -खाः । 17 Mss -र्मणः । 18 Tib omits पञ्च । 19 P -षणं, B विभूषणं । 1-19 Chinese translations omit these verses. 20 P adds अपि । Ch[2] reads the prose passages in accordance with the Sanskrit text. But Ch[1] reads it as follows: "For example, a man has four children. Every one of them is given a name such as नन्दक, जीवक, अशोक, आनन्द । Though they are born of the same father and in the same family they have different names, so are the four castes. Though the four castes are originated from the same *karman* and the same desire, yet they have four names, such as Brāhmaṇa etc. In names they are different, in reality they are the same! There is no high or low rank among them." 21 Tib omits.

पुन[1] र्भो[2] एतस्य पुरुषस्य पुत्रा[3] भवेयुः । तत्र[4] यो नन्दकः स [5]नन्देत् । यो जीवकः स [5]जीवेत् । योऽशोकः स न शोचेत्[6] । यः शतायुः स वर्षशतं[7] जीवेत् ।

नामतः पुनर्ब्राह्मण तेषां नानाकरणं प्रज्ञायते न जातितः । तत्कस्य[8] हेतोः । इह[9] खलु पुनर्ब्राह्मण पितृतः पुत्रो जायते । तस्माच्च[10] तत्रेदं व्याकरणं भवति :

माता भस्त्रा पितुः पुत्रो[11] येन जातः स एव सः ।
यद्येवं भो[12] विजानासि न ते (पुत्रा) परभूताः[13] क्वचित् ॥

परीक्षस्व ब्राह्मण सम्यगेव कोऽत्र ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति ।

सर्वे काणाश्च कुब्जाश्च सर्वेऽ[14]पस्मारिणोपि वा ।
किलासिनः कुष्ठिनश्च[15] गौराः कृष्णाः[16] पृथक् पृथक् ॥

प्रतिष्ठिताः[17] सम[18]मज्जानखत्वचपार्श्वोदरवक्त्राः प्रजा हि ताः[19] स्वकर्मणा । एवं गते ब्राह्मण नैव भवति विशेषः । को जातिकृतो विशेषः ।

यस्मान्न जातेर्विशेषणोऽस्ति तस्मान्न वै वर्णचतुष्क एव[20] ।

---

1 Tib omits. 2 Tib adds पुष्करसारिन् । 3-4 Tib पुत्रेषु । 5 Tib adds किं । 6 किं प्रहर्षेत् । 7 Tib adds न । 8 Mss तस्य । 9 Mss इति । 10 Mss repeat after this : पितृतः पुत्रो जायते । 11 Mss माता पिता (P पित्रा) भ्राता बन्धुः । Tib too reads the same. 12 Mss वा । 13 B नास्ति ते परगे, P -परगते । Tib : *gaṅ. de. ltar. rnam. par. śes. pa. de. las. gshan. du. gyur. pa. ni. 'ga'a. yaṅ med. do* । Ch[1] omits this verse. Ch[2] reads this verse as follows : "Father is their cause & condition ( हेतुप्रत्यय ) mother cherishes them in the womb. (If) father and mother are the same, one cannot say that they are children of different families." The correct reading of ( the first part of ) this verse is to be found in हरिवंश ( xxxii. 1724 verse ) & विष्णुपुराण ( iv. 19. 2 ) । 14 Mss omit सर्वे । 15 Mss -श्चैवं । 16 Mss add चैवं । Tib omits गौराः कृष्णाः । Chinese translations omit this verse. 17 Mss add ते । 18 Mss omit सम । Tib मांसमस्तिष्क for मज्जानख । 19 Mss प्रजहीत । Tib omits प्र...ताः । 20 B एष । Ch omit this and the preceding ones.

तस्मात्ते ब्राह्मण ब्रवीमि संज्ञामात्रमिदं लोकस्य यदिदं ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा चण्डाल इति वा। एकमिदं सर्वमिदमेकं। पुत्राय मे शार्दूलकर्णाय प्रकृतिं दुहितरमुत्सृज भार्यार्थाय यावन्तं कुल[1] शुल्कं मन्यसे तावन्तमनुप्रदास्यामि[2] ।

इदं पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारीदमवोचत्[2] । किं पुनर्भवता ऋग्वेदोऽधीतः, यजुर्वेदोऽधीतः, सामवेदोऽधीतः, अथर्ववेदोऽधीतः, [3]आयुर्वेदोऽधीतः कल्पाध्यायो[4] पि । अध्यात्ममपि[5] मृगचक्रं[6] वा[6] नक्षत्रगणो वा तिथिक्रमगणो वा त्वयाधीतः । कर्मचक्रं वा त्वयाधिगतं[7] । अथवाऽङ्गविद्या वा वस्त्रविद्या[8] वा शिवाविद्या[9] शकुनिविद्या वा त्वयाधीता । अथवा राहुचरितं वा शुक्रचरितं वा ग्रहचरितं वा त्वयाधीतं[10] । अथवा लोकायतं भवता[11] भाष्यप्रवचनं वा[12] पक्षाध्यायो वा न्यायो[13] वा त्वयाधीतः ।

---

1 Tib omits. 2 Ch[1] omits this passage. Ch[2] reads it. 3 Mss read आयुर्वेद before अथर्व- (Tib & Ch[2] read just in order). 4 Tib omits. 5 Tib: *nan. gi. zla. ba'i. dkyel. 'khor.* 6-7 Tib omits. 8 Tib वस्तु-। 8-9 P omits. 10 Ch[1] omits this passage. 3-10 Ch[2] reads: "Have you acquired the teachings of the ancient sages. Such as, *Ṛddhimantra*, all the forms (or formulas) of the *mantras* अध्यात्मविद्या, शकुनिविद्या (lit. शकुनपश्वादि-विद्या)। Car you foretell fortune and misfortune? Can you divine flood and drought, cheapness & dearness of crops & illness and happiness? Can you divine when there will be calamity in the country? Do you know the language of the birds? Do you know the ways (or movements) of the sun and the moon?" 11 B adds भवचक्रं। 12 Tib adds व्याकरणं वा। 13 Tib omits अध्यायः and न्यायः। 11-13 Ch[2] reads: "Do you know which weather is beneficial and which is harmful? Do you know when a comet appears? Collapse of mountains, earthquake, thunder and lightning, all such phenomena, all sudden and terrible calamities,—can you divine these? Do you know something about "sacrifice" (यज्ञ)? Do you know *Lokāyata* (philosophy), *nan shih jen ching*, भाष्यप्रवचनं, पक्षाध्यायः?"

एवमुक्ते[1] त्रिशङ्कुर्मातङ्गराजः पुष्करसारिणं ब्राह्मणमेतदवोचत्। एतच्च मया ब्राह्मणाधीतं भूयश्चोत्तरं। यदपि ते ब्राह्मण एवं स्यादहमस्मि मन्त्रेषु पारं प्राप्त इति। तत्र ते ब्राह्मण सह धर्मेणानुमानं प्रवक्ष्यामि। न खल्वेवं ब्राह्मण प्राथमकल्पिकानां सत्त्वानामेतदभवत्। यदुत ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा। एकमिदं सर्वमिदमेकं।

अथ ब्राह्मण सत्त्वानामसदृशानां चोभयथा[3] सदृशानां ततोऽन्ये सत्त्वाः शालिक्षेत्राणि केलायन्ति[4] गोपायन्ति वापयन्ति[5] वा। तेऽमी क्षत्रिया इति संज्ञा उदपादि। अथात्र ब्राह्मण तदन्यतमानां सत्त्वानामेतदभवत्[6]। परिग्रहो[7] रोगः परिग्रहो[8] गण्डः परिग्रहः[8] शल्यः। यन्नु वयं[9] स्वपरिग्रह[10]मपहायारण्यायतनं गत्वा तृणकाष्ठशाखापर्णपलाशकानुपसंहृत्य तृणकुटिकां वा पर्णकुटिकां वा कृत्वा प्रविश्य[11] ध्यायेम इति[12]।

[13]अथ ते सत्त्वास्तं स्वकं परिग्रहमपहायारण्यायतनं गत्वा तृणकाष्ठशाखापत्रपर्णपलाशकैस्तृणकुटिं वा पर्णकुटिकां वा कृत्वा तत्रैव प्रविश्य ध्यायन्ति स्म। ते तत्र सायमासनहेतोः प्रान्तवाटिकां[14] प्रातरशनहेतोश्च ग्रामं पिण्डाय प्रविशन्ति स्म।

अथ तेषां ग्रामवासिनां सत्त्वानामेतदभवत्[15]। दुष्करकारका बत भोः सत्त्वा ये स्वकं [16]परिग्रहमुत्सृज्य ग्रामनिगमजनपदेभ्यो बहिर्निर्गता[17]स्तेषां बहिर्मनस्का[18] ब्राह्मणा[19] इति संज्ञा उदपादि[20]। ते च पुनर्ग्रामवासिनः सत्त्वास्तानतीव सत्कुर्वन्ति स्म[21]। तेषां च दातव्यं मन्यन्ते स्म।

---

1 Tib एवं पृष्टः। 2-3 Tib omits. 4 Tib कर्षन्ति। 5 Tib "took possession of" or "governed". 6 Tib तमे सत्त्वा एवमचिन्तयन्। 7 *yońs. su. bar. du. gcod. pa.* =अन्तरायिक i. e. obstruction to good actions. 8 Tib *bar. chad.* 9 B & Tib omit. 10 Tib *bar. chad.* 11-12 Tib ध्यायन्तः स्थिताः। 13-14 Tib omits. Tib *dus. tshigs. su.* for प्रातर्। 15 Tib सत्त्वा एतदचिन्तयन्। 16 Tib *'dzin. pa.* 17 Tib *phyi. rol. tu. dg'a. ba.* =बहिरभिरताः। 18 Tib बहिरभिरताः। 19 Tib omits. 20 Tib कृता। 21 Tib *bkur. stir. byed. bla. mar. byed. phu. dud. du. byed. mchod. par. byed. cin*

अथ तेषामेव सत्त्वानामन्यतमे [1]सत्त्वास्तानि ध्यानान्यसंभावयन्तो ग्रामेष्ववतीर्य मन्त्रपदान् स्वाध्यायन्ति स्म। तांस्ते ग्रामनिवासिन आहुः—न[2] केवलमिमे सत्त्वा [3]इमेऽध्यापकाः,[3] तेषामध्यापका इति लोके संज्ञा उदपादि[4]।

अयं हेतुरयं प्रत्ययो ब्राह्मणानां लोके प्रादुर्भावाय। अथान्यतमे सत्त्वा [5]विवेककालप्रतिसंयुक्तान् कर्मान्तान् विविधानर्थप्रतिसंयुक्तान् कुर्वन्ति स्म[6]। तेषां वैश्या इति संज्ञा उदपादि[7]।

अथान्यतमे सत्त्वाः क्षुद्रेण कर्मणा जीविकां कल्पयन्ति स्म। तेषां शूद्रा इति संज्ञा उदपादि[8]।

भूतपूर्वं ब्राह्मण अन्यतमः सत्त्वो वधूमादाय रथमारुह्यान्यतमस्मिन्नरण्यप्रदेशे गतः। तत्र च रथो भग्नः। तस्मान् मातङ्गम [ मा त्वं गमः ] इति संज्ञा उदपादि[9]।

क्षेत्रं कर्षन्ति ये तेषां कर्षका इति संज्ञा प्रवृत्ता। भाष्येण च पर्षदं रञ्जयति धर्मेण शीलव्रतसमाचारेण सम्यक्, तस्य राजा इति संज्ञाऽभूत्[10]।

ततोऽन्ये सत्त्वा वाणिज्यया जीविकां कल्पयन्ति तेषां वणिज इति संज्ञा

---

1 Tib -त्वाः शासने स्थिता धनानि प्रार्थयमाना ग्रामे-। 2 Tib ( Narthang ) omits न। 3 Mss omit (Tib has it). 4 Ch omit this para 5-6 Tib यथा-समये युक्तान् ( or योग्यकल्पान् ) कर्मान्तान् कुर्वन्ति। 7 Ch[1] omits this para. Ch[2] reads : "There were some who practised various skilful arts which they mastered, so they were called..". Tib adds : अयं हेतुरयं प्रत्ययो लोके वैश्यानां प्रादुर्भावाय। 8 Ch[1] omits this para. Ch[2] has it. Tib adds as before अयं हेतुरयं...। 9 Mss reading seems to be defective. Tib and Chinese readings too are not satisfactory. However, they are clearer than the Sanskrit reading. We have adopted here the Tibetan one. Mss : भूतपूर्वं ब्राह्मणान्यतमस्यां वधूकायां युज्यमानायां मातङ्गान्यस्यान्यतमस्मिन् प्रदेशे रथस्याक्षोभ्यगम इति। तस्मान् मातङ्ग... [ युज्यमानायाम् अतोऽङ्गानि अस्य अन्यतमस्मिन् प्रदेशे रथस्य अक्षेभ्योऽगमन्? ]। Ch[2] reads : "In ancient time, there was a woman who walked on the road in solitude. She broke a cart. People condemned her. So there is a class of outcastes ( मातङ्ग ) in the world". 10 Tib धर्मयुक्तवचनेन पर्षदं रञ्जयनीति लोके मञ्जुभाषिणस्तस्य राजा-। Ch[2] omits this para. Ch[1] omits this sentence.

उदपादि[1] । ततश्चान्ये सत्त्वाः प्रव्रजन्ति स्म । प्रव्रजित्वा परान् जयन्ति क्लेशान्[2] जयन्तीति[2] तेषां प्रव्रजिता इति लोके संज्ञा उदपादि[3] ।

अपि तु ब्राह्मण एकैव संज्ञा लोक उदपादि । तां ते प्रवक्ष्यामि[4] ।

---

1 Ch2 omits this. It adds here: "There was a man named Śikhin (one with pigtail). All his descendants continued to have 'pigtails'. So there is a class of Śikhin in the world". 2 Tib omits. 3 Ch1 omits. Ch2 reads: "There were some who left their homes and shaved their hair. So there are *Śramaṇas* who are called प्रव्राजकाः in the world." 4 Mss तां प्रति ते वक्ष्यामि । Tib reading is adopted here. Ch1 reads this passage thus: "In the beginning of the *kalpa*, sentient beings could travel by air. They were adorned with great lustre. They had delicious food. Dresses, ornaments and such other decorations appeared spontaneously. Such things were not made by anybody.

"Later on, merit was exhausted and all these things disappeared. Then the people began to cultivate lands. Fields. were divided with demarcations and hence arose the thought of 'myself' and 'others'. There were some who had self-confidence and had more fields and grains. They looked down on others. They thought they were rich. So the people called them *Kṣetriyas* or 'Kṣatriyas' ('people of lands')

"There were some others who did not like to stay at home. They entered into the forest and practised meditations. They put on rags and begged for their livelihood. They purified themselves worshipped and offered sacrifices. Hence the people called them *Bahirmanas* or Brāhmaṇas.

"There were others who followed the profession of cultivation, hunting and fishing. They were called Vaiśyas. There were others who used to rob, steal and trade. They were merciless and cruel ( हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः । *Mahā, Śānti*, 188 ) They were called Śūdras. There were some who travelled on roads. They broke their carts and repaired them. They were called Mātaṅgas.

"Those who cultivated lands were called 'cultivators,' those who traded were called 'traders'. Distinctions or divisions like these, there were hundreds and thousands. These are only artificial names. In reality, there is no difference among them in their aim or interest."

ब्रह्मा[1] लोकेऽस्मिन्[2] इमान् वेदान् वाचयति[3]। ब्रह्मा देवानां परमतापसः। इन्द्रस्य कौशिकस्य वेदान्[4] वाचयति स्म। इन्द्रः कौशिको[5] ऽरणेमि-[5] गौतमं[6] वेदान् वाचयति। अरणेमि-[7] गौतमः[8] श्वेतकेतुं वेदान् वाचयति। श्वेतकेतुः शुकं[9] पण्डितं वेदान् वाचयति। शुकः पण्डितश्च[10] वेदान् विभजति स्म। [11]तद्यथा पुष्यो[12] बह्वृचानां[13] पंक्ति[14]श्छन्दोगानामेकविंशतिर् अध्वर्यवः। [15]क्रतु-रथर्वणिकानां। बह्वृचानामेते ब्राह्मणाः। सर्वे ते व्याख्यायन्ते[16]। पुष्य[17] एको भूत्वा पञ्चविंशतिधा भिन्नः। तद्यथा शुक्ला वल्कला माण्डव्या इति। तत्र दश शुक्लाः। अष्टौ वल्कलाः। सप्त माण्डव्याः। इतीयं[18] ब्राह्मण बह्वृचानां शाखा। पुष्य एको भूत्वा पञ्चविंशतिधा भिन्नः[19]।

अनुमानमपि ब्राह्मण प्रमाणं छन्दोगानां। [20]ब्राह्मणाः सर्व एते छन्दोगाः[21]। पंक्तिरित्येका भूत्वा साशीतिसहस्रधा भिन्ना[22]। तद्यथा शीलवल्का अरणेमिका लौकाक्षाः कौथुमा ब्रह्मसमा महासमा महायागिकाः[23] सात्यमुग्राः[24] समन्तवेदाः।

---

1 Mss & Tib ब्रह्म-। 2 Mss & Tib add स। 3 Ch² "In the beginning of the creation Brahmā taught the Vedas ( to Indra )". 4 Mss वेदार्थान्। 5 Tib omits. 6 Mss -मीगौतमौ। 7 Tib *mñes. byed.* 8 Mss -मीगौतमौ। 9 Tib *bzaṅ. po.* 10 Mss add चतुर्धा which Tib & Ch² omit. 11 Ch¹ reads : "In ancient time, there was a man called Brahmā who practised austerities and attained to great Enlightenment. He composed one Veda which was taught. Later on, there was one hermit named Śvetaketu who composed four Vedas, viz. Ṛc, Yajus, Sāman, Atharvan. Later on, there was a Brāhmaṇa named Puṣya who had 25 disciples They divided the Vedas into 25 parts. Again there was a Brāhmaṇa named Śuka who divided the Vedas into eighteen parts". 12 Tib *rgyas(l). pa.* 13 Tib *rnam. par. 'grel. pa.* 14 Mss पक्षि। Tib पक्ष *phyogs.* 15 Mss add here : अध्वर्यूणां क्रतुः which is omitted in Tib. 16 Mss बह्वृचाः। The Tib reading is adopted here. 17 Tib omits. 18-19 Tib एते ब्राह्मणा एको भूत्वा...भिन्नाः। इति बह्वृचाः। 20 Mss ब्राह्मण। 21 Tib omits this sentence. 22 Tib पक्ष एको भूत्वा सहस्रधा...। 23 Tib -यानिका। 24 Mss सत्य-। 11-24 Ch² is not clear. For Ch¹, see below.

तत्र शीलवल्का [1]विंशतिः। अरणेमिका[2] विंशतिः[2]। लौकाक्षाश्चत्वारिंशत्। कौथुमानां शतं। ब्रह्मसमानां शतं। महासमानां पञ्चशतानि। महायागिकानां शतं। [3]सात्यमुग्राणां शतं। समन्तवेदानां शतं। इतीयं ब्राह्मण छन्दोगानां शाखा। पंक्तिरित्येका भूत्वा साशोति[4] सहस्रधा भिन्ना।

अनुमानमपि[5] प्रमाणमध्वर्यूणां। एते ब्राह्मणा एकविंशत्यध्वर्यवो भूत्वा एकोत्तरशतधा भिन्नाः[6]। तद्यथा कठाः कणिमा वाजसनेयिनो जातुकर्णाः प्रोष्ठपदा ऋषयः। तत्र दश कठा दश कणिमा एकादश वाजसनेयिनः। त्रयोदश जातुकर्णाः। षोडश प्रोष्ठपदाः[7]। एक[8] चत्वारिंशदृषयः। इतीयं ब्राह्मणाध्वर्यूणां शाखा। एकविंशत्यध्वर्यवो भूत्वा एकोत्तरशतधा भिन्नाः।

अनुमानमपि ब्राह्मण प्रमाणमथर्वणिकानां। एते मन्त्राः सर्वे तेऽथर्वणिकाः। क्रतुरेको भूत्वा द्विधा भिन्नः। द्विधा भूत्वा चतुर्धा भिन्नः। चतुर्धा भूत्वाऽष्टधा भिन्नः। अष्टधा भूत्वा [नव-] दशधा[9] भिन्नः। इतीयं ब्राह्मणाथर्वणिकानां शाखा। क्रतुरेकः षोडशोत्तरद्वादशशतधा भिन्नः[10]।

अनुमानमपि[11] ब्राह्मण प्रमाणं प्रतीत्य[12] एतानि द्वादशभेदशतानि षोडशभेदाश्च[13]ये ब्राह्मणैः पौराणैः सम्यग् दृष्टाः। छन्दसि वा व्याकरणे वा लोकायते वा

---

1 Mss -ल्कलाः पञ्च-। 2 Mss omit (Tib reads). 3 Mss सत्य-। 4 Tib & Ch[2] omit. 5 Mss add ते। 6 Mss & Tib एते ब्राह्मणाः सर्वे तेऽध्वर्यवो (Tib adds एको) भूत्वा एकविंशतिधा भिन्नाः। 1-7 Ch omit the details. Ch[1] reads as follows: "There was a Brāhmaṇa named Puṣya who had twenty-five disciples who divided one Veda into twenty-five parts. There was a Brāhmaṇa named Śuka who changed one Veda into eighteen parts. There was a Brāhmaṇa named अध्वर्यु (?) whose twenty-one disciples changed the Veda into 21 parts. There was a Brāhmaṇa named Ku...(?) who changed one Veda into two, from two into four, from four into eight, eight into ten. In this way it was changed into 1216 parts." 8 Mss पञ्च-। 9 Tib द्वाविंशधा (Ch[1] दशधा), ऊनविंशधा (?)। 10 Mss दशधा भिन्ना। Tib द्वाविंशधा। Ch[1] "divided into 1216 parts". Ch[2] 1136. 11 Mss add ते। 12 Mss प्रति। 13 Tib शतोत्तरद्वाविंशभेदाः। Mss omit च।

पदमीमांसायां वा न चैषामूहापोहः[1] प्रज्ञायते[2] । यदुत एकजात्यो नामेति विदित्वा बन्धु[3] र्भवितुमर्हति[4] । तत्ते ब्राह्मण ब्रवीमि संज्ञामात्रकमेतल्लोकस्य यदुत ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा । एकमिदं सर्वमिदमेकं । पुत्राय मे शार्दूलकर्णाय प्रकृतिं दुहितरमुत्सृज भार्यार्थाय यावन्तं कुलशुल्कं मन्यसे तावन्तमनुप्रदास्यामि ।

इदं पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी तुष्णींभूतो[5] मद्गुभूतः स्रस्तस्कन्धोऽधोमुखो निष्प्रतिभः प्रध्यानपरो[6] ऽस्थात् ।

ददर्श त्रिशङ्कुर्मातङ्गराजो ब्राह्मणं पुष्करसारिणं तूष्णींभूतं मद्गुभूतं स्रस्तस्कन्ध-मधोमुखं निष्प्रतिभं प्रध्यानपरं[7] स्थितं । दृष्ट्वा च पुनरिदमब्रवीत् । यदपि ते ब्राह्मण एवं स्यादसद्दृशेन सह सम्बन्धो भविष्यतीति । न पुनस्त्वया ब्राह्मणैवं द्रष्टव्यं[8] ।

---

1 B -षां मूढः मोहः, P ऊहामोहः । 2 Tib : *'di. dag. rnams. las* (*la*.?) *mi. śes. pa. med. de. khoṅ. du. chud. do.* 3 Mss omit बन्धुः । 4 Tib has different readings : तेन सर्वमिदमेकमिति ज्ञेयं । एकत्वं सिद्धं । 5 P -त्वा । 6 Mss -परमो- । 1-6 Ch[1] reads : "So you should admit that the Vedas and Vedic classics can be changed. Now, when the Vedas can be changed, the characteristics of a Brāhmaṇa also can be changed. If you are asked whether the characteristics of a Brāhmaṇa are changeable or not, you cannot say 'they are not changeable !' Why ? Because the Vedas are changeable. So how can you make such statement that the characteristics of a Brāhmaṇa are real and fixed ! Therefore, this is not the fact that you are the best and the rest are worse or worst ! You Brāhmaṇas are proud of your wisdom and the knowledge of your scriptures ! And for that, you despise others, assuming that you are the best ! But whatever you can know or learn, the others also can do the same ! So you alone are not good, others also are good !"

7 Mss -परमं । Tib omits. 8 Tib ज्ञेयं । 4-8 Ch[2] reads in accordance with the text.

तत्कस्य हेतोः। ये प्रमाणश्रुतिशीलप्रज्ञादयो गुणा अग्र्या लोकस्य ते मम पुत्रस्य शार्दूलकर्णस्य संविद्यन्ते। यदपि ते[1] ब्राह्मण एवं स्यात्—ये वाजपेयं यज्ञं[2] यजन्ति, अश्वमेधं पुरुषमेधं शाम्यप्राशं[3] निरर्गडं [4]यज्ञं यजन्ति, सर्वे ते कायस्य भेदात्सुगतौ स्वर्गलोके[5] देवेषूपपद्यन्त इति। न[6] पुनर्ब्राह्मण त्वयैवं द्रष्टव्यं। तत्कस्य हेतोः। वाजपेयं ब्राह्मण यज्ञं यजमाना अश्वमेधं पुरुषमेधं शाम्यप्राशं[7] निरर्गडं[8] यज्ञं च यजमाना बहुधा मन्त्रान् प्रवर्तयन्तः प्राणिहिंसां च प्रवर्तयन्ति। तस्मात्ते ब्राह्मण ब्रवीमि न ह्येष मार्गः स्वर्गाय। अहं ते ब्राह्मण मार्गं स्वर्गाय[9] व्याख्यामि। तच्छृणु।

शीलं रक्षेत मेधावी प्रार्थयानः[10] सुखत्रयं।
प्रशंसां वित्तलाभं च प्रेत्य स्वर्गे च मोदनं[11]॥

यैर्ब्राह्मण इतः पूर्वं वाजपेयो यज्ञ इष्टः। यैरश्वमेधो यैः पुरुषमेधो यैः शाम्यप्राशो यैर्निरर्गडो यज्ञ इष्टः, परिगृहीतस्तैर्निरर्गलं च कामैः कामः[12]। इतो नाकः पर्यैष्यते[13]। ये ब्राह्मण इतः पश्चाद्वाजपेयं यज्ञं यक्ष्यन्ति येऽश्वमेधं पुरुषमेधं ये शाम्यप्राशं निरर्गडं यज्ञं यक्ष्यन्ति ते निरर्थकं महाविघातं संयोक्ष्यन्ति[14]।

तस्मात्ते ब्राह्मण ब्रवीमि—एहि त्वं मया सार्धं सम्बन्धं योजयस्व। तत्कस्य हेतोः। धर्मेण हि चण्डाला अजुगुप्सनीया भवन्ति[15]। अपि च।

---

1 B puts ते after स्याद्। 2 B omits. 3 Mss -प्राणं। Tib *yaṅ. dag. par. spyod. pa.* 4 B adds here समाप्रहारं। 5 Tib omits देवेषु। 6 Mss च (Tib & Ch² read न)। 1-6 Ch² reads in accordance with the text. 7 Mss -प्राणं। Tib *yaṅ. dag. par. spyod. pa.* 8 B adds समाप्रहारं। 9 Tib omits. 10 Mss प्रार्थयमानः। 11 Mss -ते। Tib reads : प्रशान्तचित्तं प्रतिष्ठां प्रेत्य च सुगतिलाभं। Ch² supports the text. Ch¹ omits. 12 B -स्तैर् निरसितकामैः कामः। P -निरर्गलं च कामे-। Tib *yoṅs. su. 'dzin. pa. de. dag. ni. med. pa. la. mos. pa. ste.* 13 P इतः कः पर्येषिते। B इष्टः कः पर्येषते। Tib *mtho. ris. la. dg'a. shiṅ. 'dod. pas.* =स्वर्गे रंतुमिष्यते। 14 Tib परिणामयन्ति। 15 Tib अशुद्धा न भवन्ति। Ch² reads the whole passage fairly in accordance with the Skt. The substance of the whole passage is found in Ch¹ afterwards.

श्रद्धा शीलं तपस्त्यागः[1] श्रुतिर्ज्ञानं दयैव च[2] ।
दर्शनं सर्ववेदानां[3] स्वर्गव्रतपदानि वै[4] ॥

प्रमाणमष्टप्रकारं स्वर्गाय[5] । तदेभिरष्टाभिः प्रकारैः स्वर्गगमनमिष्यते । ये प्रायेण जानन्ति विशेषेण खल्वप्यनेकैर्विविधैर्यज्ञैः । अष्टौ चेमा ब्राह्मण निर्दिष्टा मातृतुल्या भगिन्यो लोके प्रवर्तन्ते । तद्यथा । अदितिर्देवानां माता । [6]दितिर्दानवानां[6] । मनुर्मानवानां । सुरभिः सौरभेयानां । विनता सुपर्णानां । कद्रुर्नागानां । पृथिवी भूतानां माता सर्वबीजानां । मरुतां[7] महामहः[8] । महाकाश्यपं मनसा विदन्ति ऋषयः ।

अथ खलु भोः[9] पुष्करसारिन् ब्राह्मणानां[10] सप्तगोत्राणि व्याख्यास्यामि तानि श्रूयन्तां । तद्यथा गौतमा वात्स्याः कौत्साः कौशिकाः काश्यपा वाशिष्ठा[11] माण्डव्या इत्येतानि ब्राह्मण सप्तगोत्राणि । एषामेकैकं गोत्रं सप्तधा भिन्नं । अत्र ये गौतमास्ते कौथुमास्ते[12] गर्गास्ते भरद्वाजास्त आर्ष्टिषेणास्ते[13] वैखानसास्ते

1 Tib omits. 2 Mss & Tib तथैव च । 3 दमनं सर्वदेवानां ? Tib omits. 4 Ch² reads only four ; viz : शीलं श्रुतिः दर्शनं ज्ञानं । Ch¹ reads : (i) श्रद्धा (ii) शीलं (iii) दानं (iv) ज्ञानं (v) 'respect to the fellow-*Brahma-cārin*' (vi) श्रुतिः (vii) कायवाक्चेतसां संयमः (viii) गुरुसङ्गः । 5 Tib omits this sentence. Ch¹ : "These eight things are considered to be the 'Pure *dharma*' which every one should practise. Out of these the former seven may be attained by listening to the Guru". 6 Mss & Tib omit (Ch² reads). 7 Tib omits सर्वबीजानां मरुतां । 8 Tib reads : महामहाकाश्यपः । सुमनसा वि- । Ch¹ does not make any mention of these 'eight sisters.' Ch² names them 'eight mothers'. According to it they are : (i) mother of gods (?) (ii) mother of दानव (?) (iii) सुखिता (?) (*so. lo.*) (iv) इला (v) विनता (?) mother of birds & beasts. (vi) mother of snakes (vii) mother of सुपर्ण (viii) mother of Mahākāśyapa. 9 Tib adds ब्राह्मण । 10 Mss ब्राह्मण । Tib reads -णानां, but omits सप्त । 11 Tib *rgyas. pa.* ( व्यास ? ) । 12 Mss कौधु- । 13 Mss आष्टियना । Tib *ber. brgyad. pa.* Ch omit this sentence.

वज्रपादाः। तत्र ये वात्स्यास्त आत्रेयास्ते मैत्रेयास्ते भार्गवास्ते सावर्ण्या[1] स्ते सलोलास्ते[2] बहुजाताः। तत्र ये कौत्सास्ते[3] मौद्गल्यायनास्ते गौणायनास्ते लाङ्गलास्ते[4] लग्नास्ते दण्डलग्नास्ते[5] सोमभुवाः[वः]। तत्र ये कौशिकास्ते कात्यायनास्ते[6] दर्भकात्यायनास्ते[7] वल्कलिनस्ते पक्षिणस्ते[8] लौकाक्षास्ते लोहितायनाः (लोहित्यायनाः)[9]। तत्र ये काश्यपास्ते मण्डनास्त इष्टास्ते[10] शौण्डायनास्ते[11] रोचनेयास्तेऽनपेक्षास्तेऽग्निवेश्याः[12]। तत्र ये वाशिष्ठास्ते जातुकर्ण्यास्ते[13] धान्यायनास्ते[14] पाराशरास्ते[15] व्याघ्रनखास्त आण्डायनस्त[16] औपमन्यवाः। तत्र ये माण्डव्यास्ते भाण्डायनास्ते धौम्रायणास्ते कात्यायनास्ते खल्वाहनास्ते सुगन्धा[17]-रायणास्ते कापिष्ठलायनाः[18]।

इत्येतानि ब्राह्मण एवमेकोनपञ्चाशद्गोत्राणि ब्राह्मणैः[19] पौराणैः[19] सम्यग् दृष्टानि छन्दसि व्याकरणे पदमीमांसायां[20]। [21]अन्यानि च गोत्राणि विस्तरतो मया वाचितानि[21]। [22]तानि अन्यैर्न ज्ञायन्ते[22]।

[23]यदुतैकत्वमिति विदित्वा भवान् बन्धुर्भवितुमर्हति[24]। तस्मात्ते ब्राह्मण ब्रवीमि सामान्यं संज्ञामात्रकमिदं लोकस्य यदुत ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा। एकमिदं सर्वमिदमेकं। पुत्राय मे शार्दूलकर्णाय प्रकृतिं दुहितरमुत्सृज भार्यार्थाय। यावन्तं कुलशुल्कं मन्यसे तावन्तमनुप्रदास्यामि।[25]

---

1 Mss स्वापर्णा। Tib *sa. pa. (ba) rna.* 2 Tib *sa. ma. la. ni.* 3 Mss omit ते। 4 Tib *laṅ. cha. la.* 5 Tib *bdun. tshad (pa. chad?). lag. na*। 6 Tib *ka. na. ya. na.* 7 Tib omits. 8 Tib *bya. kin* for वल्कलिनः and पक्षिणः। 9 Mss लोहितन्यायतनाः। Tib *lo. ki. ba. da.* 10 P इष्टाकः। 11 Mss शौण्डिन्याः। 12 Mss -वैश्याः। 13 Mss जन्तु-। 14 Mss धान्यजह्यायनाः। 15 B पासरा, P पारा। 16 Mss अण्डायनाः। Tib काण्डायना (काण्वायना ?)। 17 Mss सुगन्धरा-। 18 Mss कपिष्ठी-। 19 Tib omits. 20 Tib *rkaṅ. pa. daṅ. spyod. pa. pa'i. gtsug. lag. daṅ.* 21 Mss read : वा लोकायतने वा (Tib omits) अन्यानि च गोत्राणि। 22 Mss न चैषामूहापोहः प्रज्ञायते। Tib reading is adopted here. 23-24 Tib reads : *'di. ltar. gñen. du. bya. ba. la. ṅes. pa. med. par. khyod. kyis. śes. par. gyis. śig.* 1-22 Ch omit this passage. 23-25 Ch[1] omits.

इदं पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी तूष्णींभूतो मद्गुभूतः स्रस्तस्कन्धोऽधोमुखो निष्प्रतिभः प्रध्यानपरः[1] स्थितोऽभूत् । अद्राक्षीत् त्रिशङ्कुर्मातङ्गराजः पुष्करसारिणं ब्राह्मणं तूष्णींभूतं मद्गुभूतं स्रस्तस्कन्धमधोमुखं निष्प्रतिभं[2] प्रध्यानपरं[3] स्थितं । दृष्ट्वा च पुनरिदमवोचत् ।

यादृशं वाप्यते बीजं तादृशं लभ्यते[4] फलं ।
प्रजापते[5] हि चैकत्वे निर्विशेषो भवत्यतः ॥
[6]न चेन्द्रियाणां नानात्वं क्रियाभेदश्च[7] दृश्यते ।
ब्राह्मणे वान्यजातौ वा नैषां किञ्चिद्विशिष्यते ॥
न ह्यात्मनः समुत्कर्षः श्रेष्ठ[8] त्वमिह युज्यते ।
शुक्रशोणितसम्भूतं योनितो ह्युभयं समं ॥
चातुर्वर्ण्यं प्रवक्ष्यामि पशुधर्मकथां[9] तव ।
भवेत्ते भगिनी[10] भार्या नैतद् ब्राह्मण युज्यते ॥
यदि तावदयं लोको ब्रह्मणा जनितः स्वयं ।
ब्राह्मणी ब्राह्मणस्वसा क्षत्रिया क्षत्रियस्वसा ॥
अथ वैश्यस्य वैश्या वै शूद्रा शूद्रस्य वा पुनः ।
न भार्या भगिनी युक्ता ब्रह्मणा जनिता यदि ॥
न सत्त्वा ब्रह्मणो जाताः क्लेशजाः कर्मजास्त्वमी[11] ।
नीचैश्चोच्चैश्च दृश्यन्ते सत्त्वा नानाश्रयाः[12] पृथक् ॥
तेषां च जातिसामान्याद् ब्राह्मणे क्षत्रिये तथा ।
अथ वैश्ये च शूद्रे च समं ज्ञानं प्रवर्तते[13] ॥

---

1 Mss -परमः । Tib *tha. chad. kyi. gnas.* 2 Mss निष्प्रतिमानं । 3 Mss -परमं । Tib *tha. chad. kyi. gnas.* 4 Mss लभते । 5 Tib omits पति । 6 Mss स । Tib omits न । 7 Mss -वादेन ( Tib -भेदः ) । Ch[2] omits this line. 8 Tib omits श्रेष्ठत्वं, it reads समुत्कर्ष इह- । Mss -र्षाच्छ्रेष्ठ- । 9 Tib -समं । 10 Mss भगिनी भवति ते । 11 Ch[2] हेतुप्रत्ययजाः कामजाः for क्लेशजाः । 12 Ch[2] कर्माश्रियाः or चर्याश्रियाः । 13 Tib reads : यथा त्वं तथा एता अपि जातयः श्रेष्ठाः । अतो ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति संज्ञा न प्रवर्तते । Ch[2] reads : "People do not understand this. The Kṣatriya, Brāhmaṇa, Vaiśya and Śūdra—all these are conventional." 1-13 Ch[1] omits.

ऋग्वेदोऽथ यजुर्वेदः सामवेदोप्यथर्वाणं ।
इतिहासो निघण्टश्च कुतश्छन्दो निरर्थकं[1] ॥
अस्माकमप्यध्ययने मैत्री विद्या तथा शिखी[2] ।
संक्रामणी प्रक्रामणी[3] स्तम्भनी[4] कामरूपिणी ॥
मनोजवा च गान्धारी घोरी[5] विद्या वशङ्करी[6] ।
काकवाणी[7] च मन्त्रं च इन्द्रजालं च भञ्जनी[8] ॥
अस्माकमासीत्पुरुषा विद्यास्वाख्यातपण्डिताः[9] ।
मणिपुष्पाश्च[10] ऋषयो भास्वराश्च[11] महर्षयः ॥
संप्राप्ता दैवता-ऋद्धि किं[12]चिकित्ससि विद्यया[13] ।
अशिक्षिताश्च चण्डाला[14] ब्राह्मणा वेदपारगाः ॥
कपिञ्जलाद्या[15]जनितो मन्त्राणां पारमिंगतः ।
न ह्यसौ ब्राह्मणीपुत्रः किं वा ब्राह्मण मन्यसे[16] ॥

---

1 *sdeb. sbyor. ji. ltar. don. med. min.* कथं छन्दो निरर्थकं न भवति । 2 P omits this line and reads in its place : मणिपुष्पाश्च......महर्षयः । Tib *gso. ba* ( चिकित्सा ) for शिखी । 3 P omits. Tib reads प्रमोहिनी । 4 Tib omits. 5 P omits. 6 Tib reads simply : *śaṅ. ka. daṅ* for विद्या वशङ्करी । 7 Tib *sprul. daṅ rin. chen.* 8 Tib *'jigs* ( for *'jig* ). 9 Tib *graṅs. la. mkhas. par. gyur. pa* = संख्या or सांख्य ( शास्त्रेषु ) पण्डिताः । 10 Tib *mtsho'i. sñiṅ. po. rin. chen.* lit. सरः (समुद्र ?) सारमणि । It may be मणिपुष्प (सरःसारं =पुष्पं?)। Ch[2] reads simply मणि । 11 B संवराश्च (Ch[2] भास्वरा) । Tib reads : *raṅ. gi. sriṅ. mo. rnams. la. dg'a* = अस्माकं भगिनीषु रताः ; it omits both ऋषयो and महर्षयः । 12-13 Tib *gso. ba. yi. ni. rig. pa. rnams.* lit. चिकित्साविद्याः । It is apparently a wrong translation of किं चिकित्ससि विद्यया । 14 It is adopted from the Tib. Mss read : आवशिष्टाश्च- । अव- ? 15 Adopted from Tib. Mss कपिञ्जल्या । 1-16 Ch[2] reads the whole passage : though sometimes with wrong renderings. Ch[1] omits. It reads only : "Vasiṣṭha had two sons named शुद्ध and पान born of his Caṇḍāla wife. Both of them became पञ्चाभिज्ञः ऋषिः । They transformed the Vedas ( into divisions )." Tib reads : किं वाऽब्राह्मणं मन्यसे ।

निषाद्यजनयत्काली पुत्रं द्वैपायनं मुनिं[1] ।
उग्रं तेजस्विनं भीष्मं पञ्चाभिज्ञं महातपं ।
न ह्यसौ ब्राह्मणीपुत्रः किं वा ब्राह्मण वक्ष्यसि[2] ॥
क्षत्रिया रेणुका नाम जज्ञे रामं महामुनिं[3] ।
पण्डितं च विनीतं च सर्वशास्त्रविशारदं[4] ।
न ह्यसौ ब्राह्मणीपुत्रः किं वा ब्राह्मण वक्ष्यसि ॥
ये च ते मनुजा आसन् तेजसा तपसा[5] युताः ।
पण्डिताश्च विनीताश्च लोके च ऋषिसम्मताः[6] ।
न हि ते ब्राह्मणीपुत्राः किं वा ब्राह्मण वक्ष्यसि ॥
संज्ञा कृतेयं लोकस्य ब्राह्मणाः क्षत्रियास्तथा ।
वैश्याश्चैव तथा शूद्राः संज्ञेयं संप्रकीर्तिता[7] ॥

तस्मात्ते ब्राह्मण ब्रवीमि संज्ञामात्रकमिदं लोकस्य यदुत ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा । एकमिदं सर्वमिदमेकं[8] । पुत्राय मे

---

1 Tib नीचवंशोद्भवश्चर्षिः कृष्णद्वैपायनो मुनिः । Ch[1] cites the story of his own as well as of his mother's birth. 2 Ch[2] reads : "There was a Brahmarṣi named तीर्थिक who was born of काली । स च मन्त्राणां पारमिंगतः etc." After this it adds : "मुक्तद्वार (?) ऋषि had a son who was called मत्स्यज as he was born of a fish. He was a hero well-versed in the Vedas etc." After this *śloka*, Tib adds : *tha. sñad. du. ni. btags. pa. ste.* Ch[1] adds : "There was a Kṣatriya named भीम (-ष्म ?) who attained to Ṛṣihood and psychic powers. He was very wise as well as eloquent in his speech. He could teach many Brāhmaṇas. Do you think that he was lower than a Brāhmaṇa ?" 3 Ch[2] omits the names. It simply reads : "A Kṣatriya gave birth to a Brāhmaṇa." 4 Ch[1] cites here a story illustrating Rama's love and devotion towards his mother Reṇukā which is not found anywhere ( vide Introduction ). 5 P omits. 6 B omits ऋषि । Tib reads : ऋषयो लोकसम्मताः । 7 Tib *tha. sñad. du. ni. 'jigs. pa* ( read : *briod. pa* ) *yin.* 8 P एकमिदमेकं ।

शार्दूलकर्णाय प्रकृतिं दुहितरमनुप्रयच्छ भार्यार्थाय। यावन्तं कुलशुल्कं मन्यसे तावन्तमनुप्रदास्यामि।

इदं च पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी त्रिशङ्कुं मातङ्गराजमिदमवोचत्। किंगोत्रो भवान्। आह आत्रेयगोत्रोऽस्मि। किंपूर्वः। आह। आत्रेयः। किंचरणः। आह कालेय[1]-मैत्रायणीयः। कति प्रवराः। आह त्रयः प्रवराः। तद्यथा वात्स्याः कौत्स्या भरद्वाजाश्च। के भवन्तः सब्रह्मचारिणः। छन्दोगाः[2]। कति छन्दोगानां भेदाः। षट्। ते कतमे। आह। तद्यथा। कौथुमाः। चारायणीयाः। लाङ्गलाः। सौवर्चसाः। कापिञ्जलेयाः। आर्ष्टिषेणा इति।

किं भवतो मातृजं गोत्रं। आह। पाराशरीयं। पठतु भवान् सावित्रीं। कथं भवति[3]। कत्यक्षरा सावित्री। कतिगण्डा[4]। कतिपदा[5]।

चतुर्विंशत्यक्षरा सावित्री। त्रिगण्डा। अष्टाक्षरपदा[6]। उच्चारयतु भवान् सावित्रीं।

अथ खलु भोः पुष्करसारिन् सोत्पत्तिकां सावित्रीं प्रवक्ष्यामि। तच्छ्रूयतां।

कथयतु भवान्।

भूतपूर्वं ब्राह्मणातीतेऽध्वनि वसुर्नाम ऋषिर्बभूव[7]। पञ्चाभिज्ञ उग्रतेजा महानुभावो ध्यानानां लाभी। तेन तत्र[8] तक्षकदुहिता[9] कपिला[10] नाम आसादिता भार्यार्थं। स तत्र संरक्तचित्तस्तया कन्यया सार्धं मैथुनमगच्छत्। स ऋषि

---

1 Tib omits. P reads कालाय (प)। 2 P omits. 3 Mss अकतिगाथा। Ch omit. The Tib reading is adopted here. 4 =खण्डा। Ch[1] 'parts', Ch[2] अङ्ग, Tib *gdon. pa.* (?)। 5 Tib *tshig. ni. du. shig. rkan. pa. ni. du. shig.* 6 Tib *tshig. ni. gsum. mo. rkan. pa. ni. yi. ge. brgyad. do* = त्रिपदाऽष्टाक्षरपदा। Ch[2] चतुष्पदा। Ch[1] reads : "This *mantra* consists of three parts and twenty-one sentences (?); again eight parts with eight पद (*chu*)"। 7 P अभूत्। 8 Ch[1] adds नागराज। 9 Ch[2] "daughter of father-in-law." 10 Ch[1] reads पीतवर्णा शोभना चार्वङ्गी। Ch[2] पीतमस्ता (-केशी)।

अवद्ध्या भ्रष्टो[1] ध्यानेभ्यो वञ्चितः[2] । अवद्धिपरिहीनः[3] स विप्रतिसारी आत्मनो दुश्चरितं विगर्हमाण[4] स्तस्यां वेलायां सावित्रीं[5] भाषते स्म । तद्यथा ।

ओं भूर्भुवः स्वः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः[6] प्रचोदयात् ।

इति हि ब्राह्मण [7]अज्ञानशोधनार्थमिममेव मन्त्रं स ब्राह्मणो दिवारात्रं जपति स्म[8] । इयं ब्राह्मणानां सावित्री । पूर्वजः प्रजापतिः[9]

[10]जटिलस्तापसो भूत्वा गहनं वनमाश्रितः ।
गम्भीरावभासे[11] तत्र [12]ह्यात्मारामस्तपोरतः[13] ।

देवस्य श्रेष्ठकं भोजनमुपनाम्यो[14]पविष्ट इमं मन्त्रमजपत्[15] । इयं क्षत्रियाणां सावित्री ।

ओं चित्रं[16] हि[17] वैश्यकन्यका । अथ सा कन्या अर्थतः प्रवीणा[18] ।

---

1 B विभ्र- । 2 Mss रिश्चितः । 3 Translations omit. 4 Tib *ñams. pas.* ( नाशयितुं ) । 5 Ch¹ & Tib इमं मन्त्रं । Ch² reads : "The code of emancipation from sins." 6 Mss -नि । 7-8 The Tib reading is adopted here. Mss read : यत्सवितुर्न ( : ) कपिलाया ( भर्गः कपिलाया P adds ) भर्गो देवस्य धीमहि । 8 Ch omit this sentence. 9 Mss पूर्वयोनिः ( नेः P ) प्रजापते । Ch omit. 10 Mss and Ch¹ add ओं । Ch² adds before it : "The sense is being explained here." 11 Ch¹ गम्भीरे । Tib रमणीये निवासे स । Mss -भासे (स B) स्तत्रापि ( पि P ) रता । 12-13 This is omitted in Mss. It is adopted from Tib. Ch¹ is not clear. 13 Ch² reads : "Living on fruits and vegetables in a forest, one attains the supreme joy. He worships the *deva*, practises ( moral ) charities and distributes food to all, according to their wishes." 14 Tib *lhas. zas. mchog. byin. nas* = देवेन श्रेष्ठकं भोजनं प्रदत्त- । Mss -म्यानुप्रदास्यामः । सर्वकामगुणोपेतं सुखभोजनं क्षत्रियस्य प्रदास्यामः । These are not found in Tib. 14-15 Adopted from Tib. 16 Mss -त्रमाहि । 17 Mss सहिते । Ch¹ adds ति (ते ? ) । 18 B प्रजि । P प्रति । Ch² "Great is the beauty of the daughter of the great family. She begot the Vaiśyas and thus destroyed her beauty." Ch² reads this passage on *Sāvitrī* at the end of the text.

इयं वैश्यानां सावित्री । ओं अतपः सुतपः[1] । जीवेम[2] शरदां शतं । पश्येम[3] शरदां शतं । इयं शूद्राणां सावित्री । ओं भूर्भुवः स्वः[4] ।

कामा हि लोके परमाः प्रजानां
क्लेशप्रहाणे भूता अन्तरायाः[5] ।
तस्माद्भवन्तः प्रजहन्तु कामान्
ततोऽतुलं [6]प्राप्स्यथ ब्रह्मलोकं ।

इतीयं ब्राह्मण ब्रह्मणा सहापतिना सावित्री भाषिता, पूर्वकैश्च सम्यक्संबुद्धै रभ्यनुमोदिता ।

पठ भोस्त्रिशङ्को नक्षत्रवंशं[7] । अथ किं । भोः कथयतु भवान् । श्रूयतां भोः पुष्करसारिन् नक्षत्रवंशं कथयिष्यामि । तद्यथा ।

कृत्तिका रोहिणी मृगशिरा आर्द्रा पुनर्वसुः पुष्यः अश्लेषा मघा पूर्वफल्गुनी[8] उत्तरफल्गुनी[8] हस्ता चित्रा स्वाती विशाखा अनुराधा ज्येष्ठा मूला पूर्वाषाढा उत्तराषाढा अभिजित् श्रवणा धनिष्ठा शतभिषा पूर्वभाद्रपदा[9] उत्तरभाद्रपदा[9] रैवती अश्विनी भरणी । [10]इत्येतानि[10] भोः पुष्करसारिन्नष्टाविंशतिनक्षत्राणि ।

कतितारकाणि कतिसंस्थानानि कतिमुहूर्तयोगानि किमाहाराणि किंदैवतानि किंगोत्राणि ।

कृत्तिका भोः पुष्करसारिन्नक्षत्रं षट्तारं क्षुरसंस्थानं[11] त्रिंशन्मुहूर्तयोगं[12]

The readings of the Sanskrit Mss, Tib & Chinese transliterations and translations, all seem to be corrupted. The transliterated reading of the Ch[1] is adopted here. 1 Ch[1] प्रतपः । 2 Mss -दहं वर्षशतं । 3 Mss -श्येदहं । 4 Ch[3] omits these four sentences. Ch[1] reads simply ओं and omits भू... । 5 Mss तेषां प्रहाणाय अभूतान्तरायः । 6 Mss -तोनु(तु)प्रा- ( Tib reads : अतुलं ) । Ch[1] reads : "Where there is form, there is desire. Where there is desire, there is suffering. If one can get rid of desire, he is sure to be in ब्रह्मलोक ।" Ch[2] "कामा हि लोके परमा प्रजानां । If lust is not controlled, it will cause sins and calamities. तस्माद्भवन्तः प्रजहन्तु कामान् ततोमृतं...कं ।" 7 Tib translates it as *dbaṅ* (वश) । 8 Mss -फा- । 9 P -भद्र- । 10 B चेति । 11 Ch[1] विकीर्णपुष्पसं- । Ch[2] is not clear. Tib omits. 12 Mss दशमु- । Ch[1] द्वादश- ( Tib & Ch[2] त्रिंशन्- ) ।

दध्याहारमग्निर्दैवतं वैश्यायनोयं[1] गोत्रेण। रोहिणीनक्षत्रं पञ्चतारकं शकटाकृति[2]-संस्थानं पञ्चचत्वारिंशन्मुहूर्तयोगं [3]मृगमांसाहारं प्रजापति[4] दैवतं भारद्वाजं[5] गोत्रेण। मृगशिरानक्षत्रं त्रितारं मृगशीर्षसंस्थानं त्रिंशन्[6]मुहूर्तयोगं फलमूलाहारं[7] सोम-दैवतं[8] मृगायणीयं[9] गोत्रेण। आर्द्रानक्षत्रमेकतारं तिलक[10]संस्थानं पञ्चदश[11]-मुहूर्तयोगं सर्पिर्मण्डाहारं[12] सूर्यदैवतं[13] हारीतायनोयं[14] गोत्रेण। पुनर्वसुनक्षत्रं द्वितारं पदसंस्थानं[15] पञ्चचत्वारिंशन्मुहूर्तयोगं[16] मध्वाहारं[17] अदिति[18]दैवतं वाशिष्ठं गोत्रेण[19]। पुष्यनक्षत्रं त्रितारं वर्धमानसंस्थानं[20] त्रिंशन्मुहूर्तयोगं[21] मधुमण्डाहारं[22] बृहस्पतिर्दैवतम्[23] औपमन्यवीयं[24] गोत्रेण। अश्लेषानक्षत्रमेकतारं[25] तिलकसंस्थानं[26] पञ्चदशमुहूर्तयोगं[27] पायसभोजनं[28] सर्पदैवतं[29] मैत्रायणीयं गोत्रेण[30]।

इतीमानि भोः पुष्करसारिन् सप्तनक्षत्राणि पूर्वद्वारकाणि। मघानक्षत्रं

---

1 Ch[2] -श्वानरीयं "dwelling in fire." 2 Tib -टचका-। Ch[1] हंससंस्था-। Ch[2] शकटा-। 3 Ch[2] गो-। 4 Ch[2] श्रद्धा-। 5 Ch[2] गौतम-। 6 Mss, Tib & Ch[1] पञ्चदश। 7 Mss मूलफला-। Tib फलमूला-। Ch[1] फलाहारं। Ch[2] मृगमांसा-। 8 Ch[2] मव-(or शुभ) दैवतं। 9 Ch[2] आप्यायनी- (?)। 10 Mss तिल (Tib & Ch[2] तिलक)। Ch[1] omits. 11 Mss पञ्चचत्वारिंशन्। Tib पञ्चत्रिंशन्। 12 Ch[2] दध्या-। 13 Mss शूलभृद्- (Tib & Ch[1] सूर्य)। Ch[2] शब्द-। 14 Tib *rgyas. pa.* Ch[1] वशिष्ठ-। Ch[2] "extremely greedy (?)" 15 Mss पद्म (Tib & Ch[1] पद)। Ch[2] is not clear. 16 Mss, Tib & Ch[1] पञ्चदश (Ch[2] पञ्चचत्वारिंशन्-)। 17 Mss मधुमण्डा-(Tib & Ch[1] मध्वा-)। Ch[2] सर्पिर्मण्डा-। 18 Tib & Ch[1] बृहस्पति-। Ch[2] "master of the past" = अतीती ? (अदिति ?)। 19 Ch[2] *ts'ai chu.* 20 वर्धमान = A kind of pot, the shape is just like that which is used as the lid for a water-jar (Tib & Ch[1] support the Mss reading). Ch[2] reads "shape like scale." 21 Ch[1] "one day" =पञ्चदशमुहूर्त-। 22 Mss मधुराहारं (Tib and Ch[2] मधुमण्डा-)। Ch[1] "peach flower". 23 (Ch[1] बृहस्पति-) Ch[2] गृहपति-। 24 Tib मैत्रायणी-। Ch...?। 25 Ch[2] पञ्च-। 26 Ch[1] omits. Ch[2] "crooked hook." 27 Ch[2] त्रिंश-। 28 Ch[2] "dried fish." 29 Ch[1] नागदै-, Ch[2] सर्पिर्दैव-। Tib पवन-। 30 Tib & Ch[1] नागगो-।

पञ्चतारं नदीकुब्ज[1] संस्थानं त्रिंशन्मुहूर्तयोगं तिलकुसराहारं[2] पितृदैवतं[3] पिङ्गलायनीयं[4] गोत्रेण। पूर्वफल्गुनीनक्षत्रं द्वितारं[5] पदकसंस्थानं[6] त्रिंशन्मुहूर्तयोगं[7] विल्वभोजनं[8] भवदैवतं[9] गौतमीयं गोत्रेण[10]। उत्तरफल्गुनीनक्षत्रं द्वितारं पदक[11]संस्थानं पञ्चचत्वारिंशन्मुहूर्तयोगं[12] गोधूममत्स्याहारम[13]र्यमादैवतं[14] कौशिकं गोत्रेण[15]। हस्तनक्षत्रं पञ्चतारं हस्तसंस्थानं[16] त्रिंशन्मुहूर्तयोगं श्यामाकभोजनं[17] सूर्यदैवतं[18] काश्यपं गोत्रेण[19]। चित्रानक्षत्रमेकतारं तिलकसंस्थानं[20] त्रिंशन्मुहूर्तयोगं[21] मुद्गकुसरघृतपूपाहारं[22] त्वष्टृदेवतं[23] कात्यायनीयं गोत्रेण[24]।

स्वातीनक्षत्रमेकतारं तिलकसंस्थानं[25] पञ्चदशमुहूर्तयोगं मुद्गकुसरफलाहारं[26] वायुदैवतं[27] कात्यायनीयं गोत्रेण[28]। विशाखानक्षत्रं द्वितारं

---

1 Mss -कुब्ज (Ch नदीकुब्ज or कुब्जनदी-)। Tib नदीकण्ठ-। 2 Tib *til. gyi. ri. lu* (?) *dan 'o. ma'o.* तिल......दुग्धाहारं (Ch same as Mss). 3 Tib शनि-। Ch पितृ (प्रेत) -दै-। 4 Ch[2] ... *bao pien* (Tib & Ch[1] same as Mss). 5 Ch[2] त्रितारं। 6 Mss फलक। Tib & Ch[1] पदक। Ch[2] ...?। 7 Only Ch[1] differs. It reads: "One day duration (पञ्चदश-)"। 8 P श्यामाक- (Tib विल्व)। Ch[1] फल-। Ch[2] आम्रफ- (or plum-fruit)। 9 Mss पितृ, Tib & Ch भव्य or भव-। 10 Ch[1] differs, it reads भव or भव्य-। 11 Tib खट्वा। Ch[1] पद। Ch[2] ...?। 12 Ch[1] "one and a half days", Ch[2] पञ्चत्रिंश-। 13 Tib अश्ममण्डुक (कर्कट) मांसा-। Ch[1] मकरमांसा-। Ch[2] माषा-। 14 Ch differ. Ch[1] वाक्दैवतं। Ch[2] *chung chih*। 15 Ch[2] differs; it reads...*shih. li.* =क्रोश-क्रोशिक (कौशिक ?) 16 Ch[2] differs. It reads हस्ति- (It has wrongly translated हस्त-नक्षत्रं as हस्ति-नक्षत्रं, hence arises such a mistake). 17 Tib adds विहङ्गादि-। Ch[2] पलाण्डु- (leeks or onions). 18 Ch differ, Ch[1] त्वष्टृ (?)-। Ch[2] "master of sleep." 19 Ch[1] differs, it reads श्याम- (?)। 20 Ch[1] omits. Ch[2] agrees. Tib reads: पुष्करसारसंस्थानं। 21 Mss पञ्चदश, Ch[1] "one day duration =पञ्चदश"-। 22 Tib *śin. tog. sna. tshogs. z'o.* Ch[1] पुष्पाहारं, Ch[2] omits. 23 Tib आदित्य-। Ch[1] त्वष्टृ (?)। Ch[2] *hsi hua.* 24 Ch[1] agrees. Ch[2] इलायनीयं ? Tib *nag.* (Narthang: *nags*) *pa. yan. 'o.* 25 Ch[1] omits. 26 Tib मुद्गशालिघृता-। Ch[1] यवशालिचूर्णा- (?), Ch[2] फला-। 27 Ch[1] त्वष्टृ (?)। 28 Tib: *yid. can. gyi. rgyud. do*। Ch[1] सूर्यगोत्रं (?)। Ch[2] कल्याणगोत्रं।

विषाणसंस्थानं[1] पञ्चचत्वारिंशन्मुहूर्तयोगं [2]तिलपुष्पाहारमिन्द्राग्निदैवतं[3] शांखायनीयं[4] गोत्रेण ।

इत्येतानि भोः पुष्करसारिन् सप्तनक्षत्राणि दक्षिणद्वारकाणि !

अनुराधानक्षत्रं चतुस्तारं रत्नावलीसंस्थानं[5] त्रिंशन्मुहूर्तयोगं सुरामांसाहारं मित्र[6] दैवतमालम्बायनीयं गोत्रेण[7] । ज्येष्ठानक्षत्रं त्रितारं यवमध्यसंस्थानं[8] पञ्चदश-मुहूर्तयोगं शालियवागु[9] भोजनमिन्द्रदैवतं[10] दीर्घकात्यायनीयं[11] गोत्रेण । मूलनक्षत्रं सप्ततारं[12] वृश्चिकसंस्थानं त्रिंशन्मुहूर्तयोगं मूलफलाहारं[13] नैर्ऋतिदैवतं[14] कात्यायनीयं[15] गोत्रेण । पूर्वाषाढानक्षत्रं चतुस्तारं गोविक्रमसंस्थानं[16] त्रिंशन्मुहूर्त-योगं[17] न्यग्रोधकषायाहारं[18] तोयदैवतं [19]दर्भकात्यायनीयं गोत्रेण । उत्तराषाढानक्षत्रं चतुस्तारं गजविक्रमसंस्थानं[20] पञ्चचत्वारिंशन्मुहूर्तयोगं मधुलाजाहारं[21] विश्वदैवतं[22] मौद्गलायनीयं[23] गोत्रेण । अभिजिन्नक्षत्रं त्रितारं गोशीर्षसंस्थानं षण्मुहूर्तयोगं[24]

---

1 Tib : विषाणान्वितशिरः- । Ch[1] मेषविषा- । Ch[2] गोविषा- । 2 Tib & Ch[1] omit तिल ( Ch[2] supports the text ). 3 Ch[1] अग्निदै- । Ch[2] इलादै- । 4 Tib *bsdus. pa. ya. na'o* = संचयन (?) । Ch[1] शांखायन (?) । Ch[2] *chi p i.* 5 Tib *glan. po. che'i. mgo. dan. sna. lta. bu.* गजमस्तकनासिका- (?) । Ch[1] agrees with Skt. 6 Tib बृहस्पति- । 7 Ch[2] omits this *nakṣatra.* 8 Tib सोपानावली- । Ch[1] पक्षि- । Ch[2] यव-संस्थानं ( it explains, "Edges are thin and the middle is thick" ) । 9 Tib adds : गोधूम- । Ch शालिभो- । 10 Ch[1] द्यावापृथिवी- । 11 Tib *rin. po'i. rgyud. do.* Ch[1] simply कात्यायनीयं । Ch[2] दीर्घशाकटायनीयं । 12 Tib नव- । Ch[2] त्रि- ( Ch[1] supports the text ). 13 Ch[1] फला- । 14 Tib & Ch[1] रुद्र- ( Ch[2] supports the text ). 15 Ch[2] शाकटायनीयं । 16 Tib समुच्छ्रितगोपुच्छ- (Ch[1] supports the text) Ch[2] हस्ति- ; it adds ; "southward broad northward narrow". 17 Ch[2] पञ्चदश- । 18 Tib lit. न्यग्रोधक्षीरा- । Ch[1] -फला- । Ch[2] -त्वचा- । 19 Mss गर्दभ- । Tib *dur. ba'i. rgyud. do.* Ch[1] simply कात्यायनीयं । Ch[2] शाकटायनीयं । 20 Ch[2] simply गजसंस्थानं । It explains : "It is broad in the south and narrow in the north." . 21 Ch[1] "peach-flowers as food". Ch[2] मधुमण्डाहारं । 22 Tib *rgyas. pa.* Ch[1] रुद्र- ( Ch[2] supports the text ). 23 Ch[1] कालायनीयं । Ch[2] *hsiang so tso .* 24 Ch[1] reads "one hour".

वाय्वाहारं[1] ब्रह्मदैवतं ब्रह्मावतीयं गोत्रेण। श्रवणानक्षत्रं त्रितारं यवमध्यसंस्थानं[2] त्रिंशन्मुहूर्तयोगं पक्षिमांसाहारं विष्णुदैवतं[3] कात्यायनीयं[4] गोत्रेण।

इत्येतानि भोः पुष्करसारिन्[5] सप्तनक्षत्राणि पश्चिमद्वारकाणि।

धनिष्ठानक्षत्रं चतुस्तारं शकुनसंस्थानं[6] त्रिंशन्मुहूर्तयोगं कुलत्थपूपाहारं[7] वसुदैवतं[8] कौण्डिन्यायनीयं[9] गोत्रेण। शतभिषानक्षत्रमेकतारं तिलकसंस्थानं[10] पञ्चदशमुहूर्तयोगं[11] यवागुभोजनं[12] वरुणदैवतं[13] ताण्ड्यायनीयं[14] गोत्रेण। पूर्वभाद्रपदानक्षत्रं द्वितारं पदकसंस्थानं[15] त्रिंशन्मुहूर्तयोगं [16]मांसरुधिराहारमहिर्बुध्न्यदैवतं[17] जातूकर्ण्यं[18] गोत्रेण। उत्तरभाद्रपदानक्षत्रं द्वितारं पदकसंस्थानं[19] पञ्च-

1 Ch¹ expresses it in the following way. "It has no food" i. e. वाय्वाहारं। 2 Tib डिण्डिम-। Ch यवसं-। Ch² explains: "Edges are thin and the middle is thick". 3 Ch² विश्व-। 4 Mss & Tib: त्रिका-। Ch¹ simply कात्या-। Ch² omits. 5 B omits. 6 Mss शकुनि-। Ch² ...मणि-। 7 पूप is omitted in all the translations. Tib adds, "a little". Ch² adds, "a little soup (of pulse)". Ch¹ simply pulse or कुलत्थ। 8 Ch² is not clear. It may be वसु। 9 Ch² is not clear. It may be कौण्डिन्य। 10 Ch¹ omits it. 11 B पञ्चचत्वारिंशन्-। 12 Tib adds गोधूम। Ch² "rice gruel" (Ch¹ supports the text). 13 Ch² पूषदै-। 14 Ch² is not clear, it reads "devil as its god"; it may be ताण्ड्यायन in a far-fetched sense. 15 Tib: *rta. pa* (Narthang: *ta. pa*) =सादि-। Ch¹ supports the text. Ch² omits it. It adds: "These two stars are far from each other." 16 Tib adds मेष before मांस। Ch² मांसपूपा- (Ch¹ supports the text). 17 Tib wrongly translates it as: *klu. dan. gza'a. lag* (*lhag* =बुध) *go*. Ch¹ simply बुध्न्यदै-। Ch² reads: *jen shih*. 18 Tib *bram. ze. rna. can. no*. Ch¹ transliterates it as: जाकण्य। Ch² translates it as: जातकर्ण। 19 Ch² omits it. It adds: "They are far from each other".

चत्वारिंशन्मुहूर्तयोगं[1] मांसाहारम्[2] अर्यमादैवतं[3] ध्यानद्राह्यायणीयं गोत्रेण[4] । रेवतीनक्षत्रमेकतारं[5] तिलकसंस्थानं[6] त्रिंशन्मुहूर्तयोगं दध्याहारं[7] पूषदैवतमष्टभगिनीयं[8] गोत्रेण । अश्विनीनक्षत्रं द्वितारं[9] तुरगशीर्षसंस्थानं[10] त्रिंशन्मुहूर्तयोगं मधुपायसभोजनं[11] गन्धर्वदैवतं[12] मैत्रायणीयं[13] गोत्रेण । भरणीनक्षत्रं त्रितारं[14] भगसंस्थानं[15] त्रिंशन्मुहूर्तयोगं तिलतण्डुलाहारं[16] यमदैवतं भार्गवीयं[17] गोत्रेण ।

इत्येतानि भोः पुष्करसारिन् सप्तनक्षत्राणि उत्तरद्वारकाणि ।

अमीषां भोः पुष्करसारिन्नष्टाविंशतीनां नक्षत्राणां षण्नक्षत्राणि पञ्चचत्वारिंशन्मुहूर्तयोगानि । तद्यथा । रोहिणी पुनर्वसु उत्तरफल्गुनी विशाखा उत्तराषाढा उत्तरभाद्रपदा चेति ।

पञ्चनक्षत्राणि पञ्चदशमुहूर्तयोगानि । तद्यथा । आर्द्रा अश्लेषा[18] स्वाती[19] ज्येष्ठा शतभिषा[20] चेति । एकोऽभिजित् षण्मुहूर्तयोगः[21] । अवशिष्टानि त्रिंशन्मुहूर्तयोगानि ।

1 Ch[1] त्रिंशन्- । Ch[2] पञ्चत्रिंशन्- । 2 Tib माषा- । Ch[2] गोमांसा- । 3 Mss अहिर्बुध्न- । Ch[1] भव- । Ch[2] धान्यदैवतं । 4 Tib : *nor. rgyas. kyi. rgyud. do* =धन- आप्यायनीयं ? Ch[1] द्राह्यायणीयं । Ch[2] "It has no *gotra*". Mss ध्यान- द्रौप्यायनी- । 5 Ch[1] reads : "One big star accompanied by small ones." 6 Ch[1] is not clear. 7 Ch[1] दध्यन्ना- । Ch[2] मृगमांसा- । 8 Ch[2] पुण्डरीकं, =पौण्डरीकं गोत्रेण । 9 Ch[2] त्रितारं । 10 Tib : *rta. 'gro* ( *mgo* ? ) तुरगविक्रम- । Ch[2] *ma an* ( Ch[1] supports the text ). 11 Tib *thug. pa.* for पायस । Ch[1] simply पायस, Ch[2] "fish and cooked wheat ( its food )." 12 P अश्विदै- । Ch[1] omits ( Ch[2] supports the text ). 13 Tib : *rna. 'jig* (s) *nas. kyi. rgyud. do.* काण्वायनीयं (?) । Ch[1] omits. Ch[2] आश्वलायनीयं- (cf. *Divy.*). 14 Ch[2] पञ्च । 15 Ch[1] reads "caldron" for भग । Ch[2] reads *k'o.* 16 Ch[1] तिलाहारं । Ch[2] मृग[मांस]ाहारं । 17 Ch[1] भग । Ch[2] *jih chia.* 18 Ch[2] पूर्वाषाढा । 19 Ch[1] पूर्वाषाढा । 20 Tib विशाखा । 21 Ch[1] "halfday duration"=$7\frac{1}{2}$ ( or 15 ) मुहूर्त- ।

अमीषां भोः पुष्करसारिन् सप्तानां[1] नक्षत्राणां पूर्वद्वारिकाणां कृत्तिका प्रथमा नामाश्लेषा[2] पश्चिमा नाम[3]। अमीषां सप्तानां[4] नक्षत्राणां दक्षिणद्वारिकाणां मघा प्रथमा नाम विशाखा[5] पश्चिमा नाम[5]। अमीषां पश्चिमद्वारिकाणां सप्तानां[6] नक्षत्राणामनुराधा[7] प्रथमा नाम श्रवणा[8] पश्चिमा नाम[9]। अमीषां सप्तानां[10] नक्षत्राणामुत्तरद्वारिकाणां धनिष्ठा प्रथमा नाम भरणी[11] पश्चिमा नाम[11]।

अमीषां भोः पुष्करसारिन्नष्टाविंशतीनां नक्षत्राणां सप्त बलानि। कतमानि सप्त। यदुत त्रीणि[12] पूर्वाणि[13] विशाखानुराधा पुनर्वसुः[14] स्वातिश्च[15]। त्रीणि दारुणानि। आर्द्रा अश्लेषा भरणी चेति। चत्वारि सम्माननीयानि। यदुत त्रीणि[16] उत्तराणि[16] रोहिणी चेति। पञ्च मृदुकानि। श्रवणा धनिष्ठा शतभिषा ज्येष्ठा मूला इति। पञ्च धारणीयानि[17]। हस्ता[18] चित्रा अश्लेषा मघा अभिजिच्चेति। चत्वारि क्षिप्रकरणीयानि। यदुत कृत्तिका मृगशिरा पुष्या अश्विनी चेति।

अमीषां भोः पुष्करसारिन्नष्टाविंशतीनां नक्षत्राणां त्रयो योगा भवन्ति। ऋषभानुसारी योगः। वत्सानुसारी योगः। युगनद्धो योगः। तत्र नक्षत्रं यदि पुरस्ताद् गच्छति चन्द्रश्च पृष्ठतः, अयमुच्यते ऋषभानुसारी योग इति। यदुत चन्द्रः पुरस्ताद् गच्छति नक्षत्रं च पृष्ठतः, तदा भवति वत्सानुसारी योगः। यदि पुनश्चन्द्रो नक्षत्रं चोभौ समौ युगपद् गच्छतः, तदायमुच्यते युगनद्धो योग इति[19]।

1 Ch² omits. 2 Ch² पूर्वाषाढा। 2-3 Ch¹ omits. 4 Ch² omits. 5 Ch¹ omits. 6 Mss & Ch² omit. 7 Ch² उत्तराषाढा। 8 Tib अभिजित्। 8-9 Ch¹ omits. 10 Ch² omits. 11 Ch¹ omits. 12 Tib wrongly reads चत्वारि। 13 Ch¹ ( पूर्वाणि = ) पूर्वफल्गुनी, -भाद्रपदा, -आषाढा। 14 Tib omits. 15 Ch² omits सप्तबलानि। It reads चत्वारि लघूनि ( *ch'ing* ) पूर्वाषाढा भाद्रपदा (2) स्वातिश्च। 16 P omits. 17 Ch² reads : चत्वारि *chih yeh* : हस्ता, चित्रा, रेवती, अभिजित्। 18 Ch¹ मृगशिरा। 19 Ch¹ gives the sense of the whole passage ; but it does not mention the names of these three *yogas*. Ch² is not clear.

अथ खलु भोः पुष्करसारिन् ग्रहान् प्रवक्ष्यामि तच्छ्रूयतां। तद्यथा शुक्रो वृहस्पतिः शनैश्चरो बुधोऽङ्गारकः[1] सूर्यस्ताराधिपतिश्चेति।

एवं विपरिवर्तमाने लोके नक्षत्रेषु प्रविभक्तेषु [2]कथं रात्रिदिवसानां ह्रासो वृद्धिश्च भवति[3]। तदुच्यते।

हेमन्तानां द्वितीये मासि रोहिण्यामष्टम्यां द्वादशमुहूर्तो दिवसो भवति। अष्टादशमुहूर्ता रात्रिः। ग्रीष्माणां पश्चिमे मासे रोहिण्यामष्टम्यामष्टादशमुहूर्तो दिवसो भवति। द्वादशमुहूर्ता रात्रिः। वर्षाणां पश्चिमे मासे रोहिण्यामष्टम्यां चतुर्दशमुहूर्तो दिवसो भवति। षोडशमुहूर्ता रात्रिः[4]।

किं भोस्त्रिशङ्को रात्रिदिवसानां[5] प्रस्थानं[5]। दिवसानुदिवसं। किं पक्षस्य

---

1 Mss and Tib add राहुः केतुः। Ch read "seven planets." Ch[1] remarks at the end : "Including *Rāhu* and *Ketu* they are generally nine." 2-3 Mss कति रात्रिदिवसानि भवन्ति। कथं ह्रासो वृद्धिश्च। 3 Tib reads this sentence as : नक्षत्रलोकसमागमो व्याख्यातः। कथं रात्रिदिवसानां ह्रासो वृद्धिश्च भवति। 4 Ch[2] reads : "In winter, in the twelfth month, on the eighth day"—after this it reads the same as the text. "In spring, in the fourth month, on the eighth day"—after this it reads the same as the text. Then the reading is different : "In summer (Sung ed. omits), in the seventh month, on the eighth day, the day and the night are equal ( that is, both consist of fifteen *muhūrtas* )." Ch[1] reads : "In winter ( at solstice ? ), in the eleventh month, the day is the shortest, it consists of twelve *muhūrtas* while the night consists of eighteen. In summer at solstice, in the fifth month, the day consists of eighteen *muhūrtas* and the night of twelve. In the eighth and second months, (at equinox ?) days & nights are equal. From the fifth to the eleventh month, days shorten and nights lengthen. ( Afterwards ) Nights shorten and days lengthen up to the fifth month. Days and nights shorten or lengthen by one *muhūrta*." 5 P omits.

प्रस्थानं । प्रतिपद्[1] । किं संवत्सरस्य प्रस्थानं । पौषः[2] । किमृतूनां प्रस्थानं । प्रावृट्[3] ।

किं भोस्त्रिशङ्को क्षणस्य परिमाणं । किं लवस्य । किं मुहूर्तस्य ।

तद्यथा भोः पुष्करसारिन् स्त्रिया नातिदीर्घह्रस्वः कर्तिन्याः सूत्रोद्यामः । एवं दीर्घस्तत्क्षणः[4] । विंशत्यधिकं तत्क्षणशतमेकः क्षणः[5] । षष्टिक्षणा एको लवः । त्रिंशल्लवा एको मुहूर्तः[6] । एतेन क्रमसम्बन्धेन त्रिंशन्मुहूर्तमेकं रात्रिदिवसमनुमीयते । तेषां मुहूर्तानामिमानि नामानि भवन्ति ।

आदित्य उदयति षण्णवतिपौरुषायां छायायां[7] चतुरोजा[8] नाम मुहूर्तो भवति । षष्टिपौरुषायां छायायां[9] श्वेतो[10] नाम मुहूर्तो भवति । द्वादशपौरुषायां छायायां[11] समृद्धो नाम मुहूर्तो भवति । षट्पौरुषायां छायायां[12] शरपथो[13] नाम मुहूर्तो भवति ।

---

1 Mss -दात् । 2 Mss दोषः । Tib *dgun. zla. tha. chuṅs* =माघ । 3 Ch[2] omits this para. Ch[1] "Month is counted from the first day, season is counted from spring." 4 Ch[1] reads : "The time a woman takes for spinning eight cubits yarn—is called a *kṣaṇa*". Ch[2] reads, "The time a man takes for cutting ( spinning ? ) three feet long fine thread, just three feet, neither long nor short is called *kṣaṇa* (?)." Tib reads in accordance with the text : *bud. med. ras. bal. 'khal. ba. 'da'a. ba. śin. tu. riṅ. ba. daṅ. thuṅ. bar. 'dren. pa. ma. yin. pa. de. lta. bu. ni. de. ñid. de'i. skad. cig. ma de'i. tshad. do.* 5 Tib : षड्विंशत्तत्क्षणा एकः क्षणः । Ch[1] omits तत्क्षण, it reads क्षण, लव, मुहूर्त । Ch[2] is not so clear. It also reads only three and omits this sentence. 6 (Ch[1] agrees) Ch[2] reads : "Sixty क्षण (? *chieh*) make one "*lava*" (? *hsien*) twelve *lava* make one *muhūrta*." Tib षट्क्षणा एको लवः । 7 Tib नवषष्टिपौ- । Ch[1] agrees with the text. But it adds : "In the second month, on the first day" before आदित्य उदयति । Ch[2] "nine yards and six feet shadow." 8 Mss समुद्र । 9 Ch[2] "six feet shadow." 10 Ch[1] omits the name. Ch[2] विजय । 11 Ch[2] "one yard and two feet shadow." 12 Ch[2] "six feet shadow." 13 P शतपथ । Tib शरत ( *ston* ). Ch[1] शरण, Ch[2] *wo shou.*

पञ्चपौरुषायां छायायामतिसमृद्धो[1] नाम मुहूर्तो भवति। चतुःपौरुषायां छायायामुद्गतो[2] नाम मुहूर्तो भवति। त्रिपौरुषायां छायायां सुमुखो[3] नाम मुहूर्तो भवति। स्थिते मध्याह्ने वज्रको[4] नाम मुहूर्तो भवति[5]। परिवृत्ते मध्याह्ने त्रिपुरुषायां[6] छायायां रोहितो[7] नाम मुहूर्तो भवति।

चतुःपौरुषायां छायायां बलो[8] नाम मुहूर्तो भवति। पञ्चपौरुषायां छायायां विजयो नाम मुहूर्तः। षट्पौरुषायां छायायां सर्वरसो[9] नाम मुहूर्तः। द्वादशपौरुषायां छायायां [10]वसुर्नाम मुहूर्तः। षष्टि[11]पौरुषायां छायायां सुन्दरो[12] नाम मुहूर्तः। अवतरमाण आदित्ये षण्णवति[13]-पौरुषायां छायायां परभयो[14] नाम मुहूर्तो भवति।

इत्येतानि दिवसस्य मुहूर्तानि।

अथ खलु भोः पुष्करसारिन् रात्र्या मुहूर्तानि व्याख्यास्यामि। अस्तंगत आदित्ये रौद्रो नाम मुहूर्तः। ततस्तारावचरो[15] नाम मुहूर्तः। संयमो[16] नाम मुहूर्तः[17]

---

1 Ch[2] "five feet shadow." According to this translation the name of the *muhūrta* may be समृद्धि, समृद्ध or अभिसमृद्ध or अभिसम्राद्ध। Tib reads अभिसमृद्ध। Mss अतिसमृद्धि। Ch[1] reads अतिसमृद्धि or अतिसमृद्ध। 2 Ch[2] "four feet shadow". According to this translation the name of the *muhūrta* is दुर्गत or दौर्मनस्य। Tib & Ch[1] name the *muhūrta* त्रिमण्डल or त्रिपूर्ण। 3 Ch[2] "three feet". Ch[1] names the *muhūrta* सम्मुख। 4 Ch[1] साकम् or सार्धम्। It adds, "At this time the shadow is equal to the height of a man." 5 P & Tib add here : (ततः) राक्षसो नाम मुहूर्तो भवति। 6 Tib एक- (Ch[1] त्रि-), Ch[2] omits. 7 Ch[1] "foot". 8 Ch[2] "four feet...". Mss बालो...( Tib & Ch बलो )। 9 Ch[1] "very strong". Ch[2] सर्वद्रव्य or सर्वरसः (?)। 10 Ch[2] "one yard & 2 feet.." it reads *chih yeh* =कर्माध्यक्ष (?) for वसु। 11 Tib अष्ट- ( Ch[1] षष्टि- ). Ch[2] "six yard...". 12 Ch[1] lit. ऋजु। 13 Tib नवषष्टि-। Ch[1] supports the text. Ch[2] "nine yards & six feet..." 14 Mss परमभयप्राप्त। Tib परभय। Ch[2] परमसंप्रजन्य (?)। Ch[1] evil, cruel, fierce, रौद्र। 15 Mss तारावलो (Tib तारावचर) Ch[1] तारावभास, Ch[2] सुन्दरी। 16-17 Mss omit ( Tib has it ). Ch[1] *k'uai shé*. Ch[2] *chia ying*.

सांप्रैयको[1] नाम मुहूर्तः । अनन्तो नाम मुहूर्तः[2] । गर्दभो[3] नाम मुहूर्तः । राक्षसो[4] नाम मुहूर्तः । स्थितेऽर्धरात्रेऽवयवो[5] नाम मुहूर्तः । अतिक्रान्तेऽर्धरात्रे ब्रह्मा[6] नाम मुहूर्तः । दिति[7] नाम मुहूर्तः । अर्को[8] नाम मुहूर्तः । विधमनो[9] नाम मुहूर्तः । आग्नेयो नाम मुहूर्तः । आतपाग्निर्नाम[10] मुहूर्तः । [11]अभिजिन्नाम मुहूर्तः । इत्येतानि रात्रेर्मुहूर्तनामानि । इति भोः पुष्कर-सारिनिमानि त्रिशन्मुहूर्तानि यैरहोरात्रं प्रज्ञायते[12] ।

[13]तत्क्षणः क्षणो लवो[14] मुहूर्तः । तत्र त्रिंशतितमो भागो मुहूर्तस्य लवः । षष्टितमो भागो[15] लवस्य क्षणः । विंशत्युत्तरभागशतं क्षणस्य तत्क्षणः । तद्यथा स्त्रिया नातिदीर्घह्रस्वः कर्तिन्याः सूत्रोद्यामः । एवं दीर्घस्तत्क्षणः । [16]विंशत्युत्तरक्षण-शतं[17] तत्क्षणस्यैकः क्षणः । षष्टि[18] क्षणा एको लवः । त्रिंशल्लवा एको मुहूर्तः । एतेन क्रम[19] योगेन त्रिंशन्मुहूर्तमेकमहोरात्रं । त्रिंशदहोरात्राण्येको मासः । द्वादश[20] मासाः[21] संवत्सरः । चतुरोजाः[22] श्वेतः समृद्धः[23] शरपथो[24]ऽतिसमृद्ध[24] उद्गतः

---

1 Mss सांप्रे- । Tib सांप्रतिक ( *da ltar* ). Ch[1] *an yin*. Ch[2] *yu ho*. 2 Mss add here सानुको नाम मुहूर्तः which is omitted in all the translations. 3 Ch[1] *hu*, Ch[2] गर्दभरव । 4 Tib wrongly reads : *srin. mo.* for *srin. mo.* 5 Ch[1] omits... -अर्धरात्रे and reads : निद्रा for अवयव । Ch[2] reads only अव for अवयव । 6 Tib *bram. ze*. Ch[1] omits... -अर्धरात्रे । 7 Tib *ñis. skyed* ( *ñi. skyed. ma*?). It seems to be a wrong translation of अदिति । Ch[1] reads : दिति but Ch[2] reads : *ts'ai hua*. 8 Tib *ma. rga*. Ch[1] कूजन ( or पक्षि-कूजन ). Ch[2] *wu huai*. 9 Tib : *mun. 'jigs*. Ch[1] *ts'ai*. Ch[2] *ch'i i* =विधमन ? It adds here one more *muhūrta* named शान्तिः or सुखं । 10 Tib *ñi. mas gduṅs*. Ch[1] *ying tsu*, Ch[2] *chung huo*. 11 Ch[2] omits. Ch[1] *chin chu*. 12 Mss इत्येतानि रात्रेर्मुहूर्तनामानि । यैरहोरात्राणि प्रज्ञायते । इतीमानि त्रिंशन्मुहूर्तानि । Tib : इति भोः पुष्करसारिन् इमानि त्रिंशन्मुहूर्तानि यैरहोरात्रं प्रज्ञायते । It omits the preceding sentence. Ch support the Tib. 13-14 Tib Narthang omits क्षणो लवः । Dege omits only क्षणः । 15 Tib षष्ठ [ *drug* ( *cu* ? ) *cha* ] । 16-17 P omits. 18 Tib षट् । 19 Tib omits. 20-21 P omits. 13-21 Ch[1] reads only : त्रिंशन्मुहूर्तमेकमहोरात्रं...द्वादश मासाः संवत्सरः । 22 Mss -रोष्ठ । Tib Narthang *bshi. 'thon*. Dege *-mthon*. 23 *'jam. bcas* (?) । 24 Tib omits.

[1]सुमुखो वज्रको[2] रोहितो बलो विजयः सर्वरसो वसुः सुन्दरः[3] परभयः। रौद्रस्ताराचरः[4] संयमः[5] सांप्रैयकोऽ[6] नन्तो गर्दभो राक्षसोऽपयवो ब्रह्मा[7] दिति[8] रर्को विधमनो[9] आग्नेय आतपाग्नि[10]रभिजित्।

इतीमानि मुहूर्तानां नामानि[11]।

कालोत्पत्तिमपि ते ब्राह्मण वक्ष्यामि शृणु।

कालस्य किं प्रमाणमिति तदुच्यते।

[12]द्वावक्षिनिमेषावेको लवः। अष्टौ[13] लवा एका काष्ठा। षोडश[14] काष्ठा एका कला। कलानां त्रिंशदेका[15] नाडिका। तत्र द्वे नाडिक एको मुहूर्तः।

[16]नाडिकायाः[17] पुनः किं प्रमाणं। तदुच्यते।

द्रोणं सलिलस्यैकं। तद्धरणतो द्वे पलशते भवतः[18]। नालिकाछिद्रस्य[19] किं प्रमाणं। सुवर्णमात्रम्। उपरि चतुरङ्गुला सुवर्णशलाका कर्तव्या।

---

1 Tib *ñi* (*ñe*) *skyes.* for उद्गतः। Mss सम्मुखः for सुमुखः। 2 Mss and Tib वर्जनको। 3 Tib *man. dar.* Mss परभयप्राप्तः। 4 Tib *skar. ma. spyod.* P -वचनः। 5 Tib *yaṅ. dag. gzuṅ* (*zuṅ ?*) 6 Tib *da. ltar* = सांप्रतिकः। 7 Tib *bram. ze.* Mss omit. 8 Tib : Dege omits, Narthang *ñid.* (*ñis.*) *skyes* ( द्विज ? )। Mss omit. 9 Tib : Dege *sgrub. pa.* Narthang *man.* (*mun.*) *'jigs* =विधुननः or -धुवनः। B विद्रः, P विधनः। 10 Tib : Narthang *ni. mas. gduṅs.* Dege *me. yis. gduṅs* ( आतपाग्निः )। 11 Ch omit these names here. 12 Ch[1] omits द्वौ। 13 Mss & Ch[1] चत्वारो। Tib : Dege अष्टौ, Narthang चत्वारो। 14 Mss & Ch[1] चत्वारिंशत् ( Tib षोडश )। 15 Mss एकत्रिंशद् ( Tib & Ch[1] त्रिंशद् )। Ch[2] reads : "Fifteen *hsün* अक्षिनिमेषाः make one *tsu.* Twenty *tsu* make one कला (*shih*). Thirty *shih* make one मुहूर्तः। त्रिंशन्मुहूर्तमेकमहोरात्रं............मासाः संवत्सरः"। 16 Tib adds here : मुहूर्तस्य किं प्रमाणं। यदा शतलिप्ता ( *chu sraṅ* ) -परिमाणं तोयं शीर्यते घटस्य तदैको मुहूर्तो भवति। 17-18 Tib omits. 19 Tib -घटस्य।

वृत्तपरिमण्डला समन्ताच् चतुरस्रा आयता । यदा[1] चैवं शीर्येत तत्[2] तोयं घटस्य तदेका नाडिका[3] । एतेन नालिकाप्रमाणेन विभक्ते द्वे नाडिके एको मुहूर्तः । एतेन[4] भो ब्राह्मण त्रिंशन् मुहूर्ताः । यै रात्रिदिवसा अनुमीयन्त इति ।

ततः षोडश निमेषा एका काष्ठा । षोडश काष्ठा एका कला । षष्टिकला एको मुहूर्तः[5] । त्रिंशन्मुहूर्ता एकमहोरात्रम् । त्रिंशदहोरात्राण्येको मासः । द्वादश-मासाः संवत्सरः[6] ।

एतेन पुनरक्षिनिमेषेण षोडशकोट्यो[7] ऽष्टपञ्चाशच्च शतसहस्राणि [8]अष्टाशीति-सहस्राणि[8] स एवं मापितः । तच्च ब्राह्मण कालोत्पत्तिर्व्याख्याता ।

शृणु ब्राह्मण क्रोशयोजनानामुत्पत्तिं । सप्त परमाणव एकोऽणुर्भवति । सप्ताणवः सर्वसूक्ष्मं दृश्यते । तदेकं वातायनरजः । वातायनरजांसि[9] सप्त, शशकरजः । सप्त शशकरजांस्येडकरजः । सप्त एडकरजांस्येकं गोरजः । सप्तगोरजांस्येका यूका[10] । सप्तयूका[10] एका लिक्षा[11] । सप्तलिक्षा[11] एको यवः । सप्त यवा एकाङ्गुलिः[12] । द्वादशाङ्गुलयो वितस्तिः । द्वे वितस्ती एको हस्तः । चत्वारो हस्ता एकं धनुः । धनुःसहस्रमेकः क्रोशः । चत्वारः क्रोशा एको मागधयोजनः । योजनस्य प्रमाणं पिण्डितं[13] ।

---

1 Mss यतः । 2-3 Mss ततस्तोयघटस्य छिद्रं कर्तव्यं । Tib reading is adopted here. 3 Ch¹ reads : "Fill this *Nālikā-ghaṭa* with five pints of water. A four inches round pipe made of gold, weighing six *ch'u* is to be put below the water-pot ( नालिकाघट ) । When all this water falls off by this pipe, that ( duration of time ) is called a *Nāḍikā*. Ch² omits. 4-5 B omits. 5 P चतुःषष्टि- । 4-6 Ch omit. 7 Mss -काष्ठा । 8 Mss omit. Tib reads अशीतिश्च शतसहस्राणि ( *brgya. stoṅ phrag. brgyad. cu.* Narthang omits *brgyad* and reads simply *bcu* ). Ch² disagrees. It reads : 1,16,00,050. Ch¹ omits this sentence. 9 P omits 10 Tib लिक्षा । 11 Tib यूका । 12 Mss -लिपर्व । Mss add : त्रिपर्वाण्येकाङ्गुलिः । 13 Translations omit this sentence.

परमाणूनां कोटिशतसहस्राणि चतुर्विंशतिश्चैकोनत्रिंशत्कोटिसहस्राणि[1] द्वादश[2] च शतसहस्राणि[2]। एवं मापितं योजनमिति।

शृणु ब्राह्मण सुवर्णस्य परिमाणोत्पत्तिं। तत्कथयतु[3] भवान्।

द्वादश[4] यवा माषकः। षोडश माषका एकः कर्षः[5]। सुवर्णस्य परिमाणं पिण्डितमिति[6]। द्वे कोटी पञ्चविंशतिश्च सहस्राणि पञ्चशतान्यष्टौ[7] च परमाणवः एवं मापिता ब्राह्मण सुवर्णस्य परिमाणोत्पत्तिः[8]।

शृणु ब्राह्मण पलप्रमाणं। चतुःषष्टिमाषकाः पलं मागधकं। मागधकया तुलया पलस्य परिमाणं पिण्डितं[9]। परमाणूनामष्टकोटयः [10]सप्तचत्वारिंशच्च शतसहस्राणि सप्त च सहस्राणि द्वे शते[11]ऽशीतिश्च परमाणवः। एवं मापितं ब्राह्मण पलस्य परिमाणमिति।

शृणु ब्राह्मण रसपरिमाणस्योत्पत्तिं। चतुर्विंशतिपलानि मागधकः प्रस्थः। [12]तत् रसपरिमाणं। मागधकया तुलया[13] प्रस्थस्य परिमाणं पिण्डितं। द्वे कोटिशते तिस्रश्च कोटय एकोनत्रिंशच्च[14] शतसहस्राणि चतुःसप्तति-

---

1 Tib -कोनचत्वारिंशत्कोटिशतसहस्राणि। 2 Tib omits. Ch[2] reads : 1695,00,12,000. If the above units are correct, all these calculations are wrong. It ought to be : 1549578,50,88,000. Ch[1] omits this sentence. 3-4 P omits. 5 Mss omit एक-। Tib & Ch[1] have it. 6 Tib reads शृणु ब्राह्मण for पिण्डितमिति and adds एकः कर्षो नाम। 7 Ch omit the number. This number seems to be wrong. According to the following calculations regarding पलप्रमाण and रसपरिमाण, it should be : 2,11,76,820. 8 Mss omit परिमाण। Ch[2] omits the whole paragraph. 9 Ch[2] is not clear. It reads: 3½ ounces make one *tuan* and one *tuan*...परमाणवः। 10 Mss omit सप्त, Tib reads चतुश्च- (Ch[2] सप्तचत्वारिंशत्)। 11 Ch[2] omits द्वे शते। 12 Mss omit (Tib has it). 13 Mss add पलानां परमाणूनां। 14 Tib : एकोनचत्वा.........।

सहस्राणि[1] सप्त च शतानि विंशतिश्च परमाणवः । एवं मापिता ब्राह्मण रसमानस्योत्पत्तिरिति ।

शृणु ब्राह्मण धान्यपरिमाणस्योत्पत्तिं[2] । एकोनत्रिंशतिपलान्येक-कर्षणोनानि[3] मागधः प्रस्थः । मापितं[4] धान्यपरिमाणं । मागधकया[5] तुलया प्रस्थस्य परिमाणं पिण्डितं[6] । कोटिशतमष्टौ[7] पञ्चाशच्च कोट्यो द्विरशीतिश्च शत[8] सहस्राणि एकषष्टिश्च सहस्राणि पञ्चशतानि त्रिंशच्च[9] परमाणवः । एवं मापितं ब्राह्मण धान्यस्य परिमाणमिति ।

पठ भोस्त्रिशङ्को नक्षत्रव्याकरणं नामाध्यायं । अथ खलु भो ब्राह्मण नक्षत्रव्याकरणं नामाध्यायं व्याख्यास्यामि । तच्छ्रूयतां । कथयतु भवान् ।

1 Mss omit चतुःस......णि । Ch² reads this passage as : "12 *pala* of "ghee" make one '*chi*'; according to the measurement of *Magadha* country it is one "*tou*" ; seventy *pala* of honey make one "*sheng*" (pint), one "*sheng*" =द्वे कोटिशते etc" ; it has given the correct number. 2 Tib मापं for उत्पत्तिं । 3 Tib पलानि द्वौ कर्षौ च । 4 Mss omit (Tib has it ). 5 Mss चतुःषष्टिमासिकया । Tib षष्टिमाषकाः ; it omits तुलया । 6 Mss पिण्डः । 7 Tib omits अष्टन् । 8 Mss omit शत । 9 Tib omits. Ch² states the number as : 128,22,61,530. All these numbers seem to be wrong. It may be : 184,23,83,340. Ch¹ translates the whole chapter ( from सुवर्णस्य परिमाणोत्पत्तिः- ) in the following way : "Now I shall speak about weight. Twelve *yava* make one *māṣa*, sixteen *māṣa* make one *karṣa*. Its weight is twelve '*chu*' ; 24 *chu* make one ounce, sixteen ounces make one pound, two ounces make one *pala*. Two *pala* make one *ts'o*, two *ts'o* make one *chü*, six *chü* make one *prastha*, twenty-four *pala* make one मागधप्रस्थ । Thus I have spoken about weight". Ch² "......ten *pala* make one *māgadha* "*sheng*" (pint). One pint=128,22,61,530".

कृत्तिकासु[1] जातो मानवो यशस्वी[2] भवति। रोहिण्यां जातः सुभगो भवति भोगवांश्च[3]। मृगशिरसि जातो युद्धार्थी[4] भवति। आर्द्रायां जात उत्सो ऽन्नपानानां[5] भवति। पुनर्वसौ जातः कृषिमान् भवति गोरक्षश्च[6]। पुष्ये जातः शीलवान् भवति। अश्लेषायां जातः कामुको भवति[7]। मघायां जातो मतिमान् भवति, महात्मा च[8]। पूर्वफल्गुन्यां जातो[9] ऽल्पायुष्को भवति। उत्तरफल्गुन्यां जात उपवासशीलो[10] भवति, स्वर्गपरायणश्च[11]। हस्ते जातश्चौरो भवति[12]। चित्रायां जातो नृत्यगीतकुशलो भवति, आभरणविधिज्ञश्च[13]। स्वात्यां जातो गणको भवति, गणकमहामात्रो[14] वा। विशाखायां जातो राजभटो भवति। अनुराधायां जातो वाणिजको भवति सार्थिकः[15]। ज्येष्ठायां जातोऽल्पायुष्को[16] भवति, अल्पभोगश्च[17]। मूले जातः पुत्रवान्[18] भवति, यशस्वी च। पूर्वाषाढायां जातो योगाचारो भवति। उत्तराषाढायां जातो भक्तेश्वरः[19] कुलीनश्च[20] भवति। अभिजिति जातः कीर्तिमान् पुरुषो भवति। श्रवणे जातो

---

1 P adds ब्राह्मण। 2 Ch[1] adds पूजितश्च। 3 Tib omits it. Ch[1] reads: "Rich & honoured". Ch[2] "extremely rich" for सुभगो & भोगवान्। 4 Tib: *thab. mo. don. du. gñer. par. 'gyur.* Ch[1] adds "He has a perverted mind full of ill-feelings". 5 Mss उत्सदान्नपानो। Tib: Narthang उत्सोऽन्नपानानां or पर्याप्तान्नपानो। Dege क्रोधनो जडो भोगवांश्च। Ch support the Narthang reading. 6 Ch[1] "His store-house will be full and he will have a great number of cattle". Ch[2] omits गोरक्षः। 7 Mss add उत्साहवांश्च। 8 Tib omits मतिमान् and reads महाप्रभावो for महात्मा। Ch[1] reads: बहुमानो भवति। Ch[2] महात्मा (?) भवति। 9 Ch[2] adds दरिद्रः। 10 Ch[1] शीलवान् भवति। Ch[2] adds: सद्धर्मरक्षकः। 11 Ch[1] omits it. Ch[2] "wishing to be born in a good place." Tib प्रेत्य स्वर्गे हि जायते। 12 P adds हन्तुलः। 13 Ch[1] "He can make ornaments". Ch[2] "He is fond of आभरण"। 14 Ch[1] omits. Ch[2] reads "unfortunate" for गणकमहा-। Tib reads गणमहा-। 15 Mss & Ch[1] सारथिकश्च। 16 Tib omits. 17 Ch[1] reads "dull". Ch[2] omits. 18 Ch[1] कुलीनः। 19 Mss भक्तश्चरः। Tib ईश्वरः। Ch[1] "rich". Ch[2] "He is expert in riding and commands five armies." 20 Ch omit.

राजपूजितो[1] भवति। धनिष्ठायां जातो धनाढ्यो[2] भवति। शतभिषायां जातो मूलिको[3] भवति। पूर्वभाद्रपदायां जातश्चौरसेनापतिर्भवति। उत्तरभाद्रपदायां जातो गन्धिको[4] भवति, गन्धर्वश्च[5]। रैवत्यां जातो नाविको[6] भवति। अश्विन्यां जातोऽश्ववाणिजको[7] भवति। भरण्यां जातो वध्यघातको[8] भवति। अयं भोः पुष्करसारिन्नक्षत्रव्याकरणो नाम।

पठ भोस्त्रिशङ्को नक्षत्रनिर्देशं नामाध्यायं। अथ भोः पुष्करसारिन्नक्षत्रनिर्देशं नामाध्यायं व्याख्यास्यामि तच्छ्रूयतां। [9]कथयतु भवान्[9]।

कृत्तिकासु निविष्टं वै नगरं ज्वलति श्रिया।
प्रभूतरत्नोज्वलं[10]चैव तन्नगरं विनिर्दिशेत्[11] ॥
रोहिण्यां तु निविष्टं वै नगरं तद् विनिर्दिशेत्।
धार्मिकोऽत्र जनो भूयात्प्रभूतधनसञ्चयः।
विद्याप्रकृतिसम्पन्नः[12] स्वदाराभिरतोऽपि[13] च ॥
मृगशीर्षे निविष्टं[14] तु स्त्रीभिर्गोभिर्धनैस्तथा[15]।
माल्य[16]भोगैश्च सङ्कीर्णम[17]द्भुतैश्च[18] पुरस्कृतं[19] ॥

---

1 Ch[1] "favoured" or "in an advantageous position." 2 P आढ्यो। Tib अल्पश्रुतः। Ch[1] युद्धार्थी। Ch[2] obstinate, arrogant, indignant, unchangeable, shameless. 3 Tib मालाकारः। Ch[1] "He becomes premier or general." Ch[2] "Inclined to practise the art of medicine, charm and magic". 4 Tib *dri. shim.* Ch[2] omits. 5 Tib & Ch[1] omit. Ch[2] reads "He is fond of and is expert in music". 6 Ch[1] म्लेच्छो। 7 Ch[1] गोऽश्ववाणि-। 8 Tib reading is wrong, it reads *śen. par. 'gyur. ro.* which has no meaning. It should be: *gśed. ma. 'gyur.* Ch[2] घातकमुख्यः। 9 Tib omits. 10 Tib रत्नप्रभोज्वलं। 11 Ch "Afterwards it will be burnt by fire". 12 P reads: -प्रकृतिश्चैव। B विद्याप्रतिकृतिश्चैव। 13 Ch[1] reads: "They control their lust." Ch[2]: "They practise charity and accept *śīla*". 14 Mss -ष्टे। 15 Mss त्रयो गावो धनानि च। Tib reads श्रीमद् (स्त्रीमद्?) for त्रयो। Ch स्त्री। 16 Mss मान्यो। Tib माल्य-। Ch[1] गन्धपुष्पमणिहारैः। Ch[2] पुष्पाच्छादनभोगैः। 17 Mss सङ्कीर्णैः। 18 Tib पुङ्गवैः। Ch[2] supports the Text 19 Ch[2] adds अचिरं तु विनश्यति।

आर्द्रायां मत्स्यमांसानि[1] भक्ष्यभोज्यधनानि च[2] ।
भवन्ति क्रूरपुरुषा[3] मूर्खप्रकृतयः पुरे ॥
पुनर्वसौ निविष्टे तु नगरं दीप्यते श्रिया ।
प्रभूतधनधान्यं च भूत्वा चापि[4] विनश्यति ॥

श्रीमत्पुष्ये निविष्टे तु प्रजा दुष्टा प्रसीदति[5] ।
युक्ताः[6] श्रिया[6] च धर्मिष्ठास्तथैव चिरजीविनः[7] ॥
तेजस्विनश्च[8] दीर्घायु[9] र्धनधान्यरसान्विताः[10] ।
वनस्पतिस्तथा[11] क्षिप्रं पुष्येत्तत्र[12] पुनः पुनः[13] ॥

अश्लेषायां निविष्टे तु दुर्भगाः[14] कलहप्रियाः[15] ।
दुःशीला दुःखभाजश्च[16] निवसन्ति[17] नराधमाः[18] ॥
मघायां च निविष्टे तु विद्यावन्तो महाधनाः ।
स्वदाराभिरता[19] मर्त्या जायन्ते सुपराक्रमाः[20] ॥

---

1 Tib & Ch omit मत्स्य- । 2 Tib बहूनि भोज्यपेयानि, it omits धनानि ( Ch read धनानि ) । 3 Tib and Ch¹ omit ( Ch² reads ). 4 Tib पश्चाद् । Ch¹ अचिरं तु विनश्यति । 5 Ch² omits प्रजा...... । 6 Ch omit. B आयुः श्रियाश्च । P -श्रिया च । 7 Ch² omits. 8 Mss तेजस्वी चाथ । 9 Translations omit. 10 Mss धनधान्यरसान्वितः । Tib & Ch¹ omit धन । Ch¹ reads "crops with little taste." Ch² reads : "Wealth and crops are abundant. People are inclined to offer 'sacrifice'. Food is without taste". 11 Mss -श्च तत् । 12 Mss -च्च । 13 Tib and Ch omit this sentence. Tib reads in its place : पश्चाद् धान्यस्य सर्वरसस्तिरोभवति । 14 Mss दुर्लभाः । Tib *bsod. nams. chuṅ. shiṅ* =मन्दपुण्याः, दुर्भगाः । 15 Tib adds here दुर्भगाः or दुर्भागाः । 16 Mss दुर्भगास्तत्र । Tib अतिदुर्भगाः । 17 Mss निविशन्ति । 18 Tib दुर्दान्तजनाः । 14-18 Ch¹ reads : दुर्भगाः कलहप्रिया दुःशीलाः । Ch² दुर्भगाः कलहप्रियाः and after that : "They live in sufferings and are deserted. In such a way, the common people live here." 19 Ch¹ "They cultivate *śīla*". Ch² "They feed their wives and breed children." 20 Mss स्वपरा- । Tib सुपरा- । Ch¹ reads : "They practise charity. They have filial piety and purity".

फाल्गुन्यां तु[1] स्त्रियो माल्यं भोजनाच्छादनं शुभं ।
गन्धोपेतानि धान्यानि[2] निविष्टे नगरे भवेत्[3] ॥
उत्तरायां तु फाल्गुन्यां धान्यानि च धनानि च ।
मूर्खा जना जिताः[4] स्त्रीभिर्निविष्टे नगरे भवेत्[5] ॥
हस्ते च विनिविष्टे तु विद्यावन्तो महाधनाः ।
परस्परं च रुचितं[6] शयनं नगरे[7] भवेत्[8] ॥
चित्रायां च निविष्टे तु स्त्रीजिताः सर्वमानवाः ।
श्रीमत्कान्तं च नगरं ज्वलन्तं तद् विनिर्दिशेत्[9] ॥
स्वात्यां पुरे निविष्टे तु प्रभूतधनसञ्चयाः ।
लुब्धाः क्रूराश्च[10] मूर्खाश्च प्रभूता नगरे भवेत्[11] ॥
विशाखायां निविष्टं तु नगरं ज्वलति श्रिया ।
यायजूकजनाकीर्णं[12] शस्त्रान्तं च विनिर्दिशेद्[13] ॥
अनुराधानिविष्टे[14] तु धर्मशीला जितेन्द्रियाः[15] ।
स्वदारनिरताः[16] पुण्या[17] जपहोमपरायणाः[18] ॥

---

1 Mss पूर्वफाल्गुन्यां । 2 Tib गावस्तथा धनानि च । Ch[1] ओषधयश्च धान्यानि medicine & grains both are flourishing. Ch[2] "Women there like to decorate themselves with flowers and there are scents and wealth." 3 =इति भवेत् । 4 B कृताः । P जरा कृतां । Ch[2] "Men are ruled by women". Ch[1] "Women impose themselves upon foolish men" or "Foolish men are cheated by women". Tib : धनधान्यान्विताः पुरुषास्तथा मूर्खा स्त्रियश्च । 5 =इति भवेत् । 6 Mss रुचयः । Tib मिथः प्राप्तानि शयनासनानि । 7 Mss -रं । 8 =इति भवेत् । 9 Tib reads : श्रिया युक्ताः स्त्रीपुरुषाः । पश्चात्तन्नगरमग्निना दह्यते । Ch[1] agrees with Skt. Ch[2] reads : "Women have plenty of the best kinds of jewels. They always enjoy the best things. Afterwards the town is burnt by fire." 10 Tib क्षुद्राः । Ch[1] "cruel, flatterer and fawning" ; it omits मूर्खाः । Ch[2] omits लुब्धाः and reads vicious for क्रूराः । 11 =इति भवेत् । 12 Tib adds शास्त्रज्ञैः सुरूपैर्युतं । 13 Tib पश्चाच्च वह्निना दग्धं नगरं तद्विनश्यति । Ch agree with the Text. 14 Mss -धायां नि- । 15 Ch[2] agrees. Ch[1] "They are kind filial and peaceful, they respect their elders". 16 Ch[1] omits. Ch[2] "They protect their wives." 17 Mss पुंसां, पुंसो for पुमांसो ? ( Tib पुमांसः ) Ch omit. 18 P जाप्य- । Ch[1] "They study the scriptures and diligently offer sacrifice." Ch[2] "They always offer sacrifice without fail".

ज्येष्ठायां सन्निविष्टं[1] तु बहुरत्नधनान्वितैः[2] ।
सत्त्वैर्वेदविदैः पूर्णं[3] शश्वत्समभिवर्धते[4] ॥
मूलेन सन्निविष्टं तु पुरं धान्यधनान्वितं[5] ।
दुःशीलजनसङ्कीर्णं[6] पांसुना[7] च विनश्यति ॥
पूर्वाषाढानिविष्टं[8] तु पुरं स्याद्धनधान्यभाक्[9] ।
लुब्धाः क्रूराश्च[10] मूर्खाश्च निवसन्ति[11] नराधमाः[12] ॥
निविष्टे तूत्तरायां च धनधान्यसमुच्चयः[13] ।
विद्याप्रकृतिसम्पन्नो[14] जनश्च[15] कलहप्रियः[16] ॥
अभिजिति निविष्टे तु नगरे तत्र मोदिताः[17] ।
नराः सर्वे सदा हृष्टाः परस्परानुरागिणः[18] ॥
श्रवणायां निविष्टं[19] तु पुरं धान्यधनान्वितं[20] ।
अरोगिजनभूयिष्ठ[21]सहितं तद् विनिर्दिशेत् ॥
धनिष्ठायां निविष्टं[22] तु स्त्रीजितं पुरमादिशेत् ।
प्रभूतवस्त्रमाल्यं च कामभोगविवर्जितम्[23] ॥
पुरे शतभिषायुक्त मूर्खशाठ्यप्रिया जनाः[24] ।
स्त्रीषु पानेषु संसक्ताः[25] सलिलेन विनश्यति ॥

---

1 Mss -ष्टे । 2 Mss -ताः । 3 Mss -पूर्णः । 4 Ch[1] "Inhabitants are strong and heroic." Ch[2] "Their faith is increased ( श्रद्धा समभिवर्धते ) day by day". 5 Mss धन्यधना- । Ch[2] धनरत्ना- । 6 Ch[2] दुर्दान्त- । 7 Ch[2] adds वर्षेण । 8 Mss निविष्टे । 9 Tib & Ch[1] omit धान्य । 10 Ch[1] omits. 11 Mss निविशा- । 12 Tib नरा अदमाः ( म्याः ) । 13 Mss -यं । 14 B सम्पन्नं, P -न्न, Ch[2] "People are enlightened in the art of medicine". 15 Mss -नं । 16 Mss -प्रियं । 17 Mss मोदते । 18 Tib & Ch[1] omit this verse. Ch[2] reads : "The people there are very brave. So it is always difficult to conquer that town". 19 Mss -ष्टे । 20 Ch[1] "full of riches but devoid of corn". 21 Mss -ष्ठं । Tib adds शास्त्रज्ञ (सहितं) । 22 Mss -ष्टे । 23 Ch[1] "Men & women have hardly any lust." Ch[2] "They are detached from the attraction of the sexes." 24 Ch[1] "People are flatterers ; they flatter & fawn". Ch[2] omits शाठ्यप्रियाः it reads simply मूर्खाः । 25 Ch[1] कामरागेषु आसक्ताः or insatiably lustful.

पुरे प्रोष्ठपदाध्यक्षे नरास्तत्र सुखप्रियाः[1] ।
परोपतापिनो मूर्खा मानकामविवर्जिताः[2] ॥
उत्तरायां निविष्टे तु शश्वद्वृद्धिर्[3] नुत्तरा ।
पूर्णं च धनधान्याभ्यां रत्नाढ्यं[4] च विनिर्दिशेत् ॥
पुरे निविष्टे रैवत्यां सुन्दरी जनता[5] भवेत् ।
खरोष्ट्रं चैव गावश्च[6] प्रभूतधनधान्यता[7] ॥
अश्विन्यां विनिविष्टं[8] तु नगरं[9] शिवमादिशेत्[10]
अरोगिजनसम्पूर्णं[11] दर्शनीयजनाकुलम् ॥
भरण्यां सन्निविष्टे तु दुर्भगाः[12] कलहप्रियाः ।
दुःशीला दुःखभाजश्च वसन्ति पुरुषाधमाः[13] ॥

पुराणि राष्ट्राणि तथा गृहाणि
नक्षत्रयोगं प्रसमीक्ष्य विद्वान् ।
इष्टे प्रशस्ते च निवेशयेत्तु
पूर्वं च जन्मेऽधिगतं मयेदं[14] ॥

---

1 Ch[1] agrees. Ch[2] reads : "People are rich & flourishing". 2 Ch[1] "People are jealous and fond of mean work". Ch[2] "They are foolish, they violate others' wives, they are stupid". Tib reads सुख for मानकाम । It agrees with the rest. P reads क्षाम for काम । 3 Mss -वृत्ति- ( Tib & Ch[3] -वृद्धि- ), Ch[1] "Population gradually increases". 4 Mss धनाढ्यं । Tib रत्नभक्ष्यपेयपरिपूर्णं । Ch agree with the 3rd *pāda* but after that Ch[1] reads : "They are fond of charity". Ch[2] reads : "They are fond of charity & शील ।" 5 Mss -रोजनता । Ch[1] omits it. Ch[2] "People are fond of beautiful things." 6 Ch[1] अश्व for खरोष्ट्र । Ch[2] "mules" for गावः । 7 Mss -धान्यवत् । Ch[1] प्रभूतो धनसञ्चयः । 8 Mss -ष्टे । 9 Mss -रे । 10 Tib ज्ञानादिश्रितं । 10-11 Ch[2] : "The soil is fertile. People live in peace without any affliction ( or trouble )." 12 Ch[1] "dirty and impure" for दुर्भगा and दुःशील । 13 Tib पुरुषा अदमाः(म्याः) *ma. dul. ba. gnas. par. 'gyur. ro.* 14 Ch[1] omits this verse.

अयं भोः पुष्करसारिन्नक्षत्र[1] निर्देशो नामाध्यायः ।

अथ खलु भोः पुष्करसारिन्नष्टाविंशतीनां नक्षत्राणां स्थाननिर्देशं[2] नामाध्यायं प्रवक्ष्यामि । [3]तच्छ्रूयतां ।

कथयतु[4] भगवान्[5] ।

कृत्तिका भोः पुष्करसारिन्नक्षत्रं कलिङ्गमगधानां[6] । रोहिणी सर्वप्रजायाः । मृगशिरा विदेहानां[7] राजोपसेवकानां च । [8]एवमार्द्रा क्षत्रियाणां ब्राह्मणानां[9] च । पुनर्वसुः सौपर्णानां[10] । पुष्यनक्षत्रं सर्वेषामवदातवसनानां[11] । राजपदसेवकानां च[12] । अश्लेषा[13] नागानां हैमवतानां[14] च । मघानक्षत्रं गौडिकानां[15] । पूर्वफल्गुनी चौराणां । उत्तरफल्गुनी अवन्तीनां[16] । हस्ता[17] सौराष्ट्रिकाणां[18] । चित्रा पक्षिणां द्विपदानां[19] । स्वाती सर्वेषां प्रव्रज्यासमापन्नानां[20] । विशाखा औदकानां[21] । अनुराधा वाणिजकानां शाकटिकानां च[22] । ज्येष्ठा दौवालिकानां[23] ।

---

1 Mss add पुर- । 2 Mss नानास्थानदिग्निर्देश- । 3-5 Tib omits. 6 Tib : कृत्तिकानक्षत्रं कलिङ्गमगधानां शरणं । it adds शरणं all along. Ch¹ : "*Kṛttikā* governs emperors. or कृत्तिका राजेन्द्राणामधिपत्नी । It adds all along अधिपत्ति or -पत्नी । 7 Ch¹ : कान्तारवासिनां ( lit. कान्ताराणां ) । Ch² omits राजोपसे- । 8 Tib omits एवं । Ch¹ reads : एवमार्द्रा पुनर्वसुश्च । 9 P omits ब्राह्म- । Ch² भौटानां ब्राह्म- । 10 B adds च । Ch² "families having gold & jewels". 11-12 Ch¹ omits these sentences. Ch² चीनानां । 8-13 Tib आर्द्रा पुनर्वसुः पुष्या अश्लेषा च । 14 Ch¹ हैमवतानां नागानां ( snakes and dragons dwelling in mountains ). Ch² "of rains snows & dragons". 15 Ch¹ "governs people who cultivate sugar-canes" (=गौडिकानां) । Ch² "of the weavers." 16 Ch¹ आसनिकानां । Tib : *sa. bon. 'di. rnams* =बीजानां ? 17 P हस्तं । 18 Ch¹ नागरिकाणां । 19 P omits this sentence. Ch¹ omits द्विपदानां । Ch² आरण्यकानां । 20 Mss -मापत्तीनां । 21 Mss औपपादुकानां [ Ch¹ "People who live in (or by the side of) water".]. Ch² ऐन्द्रजालिकानां । Ch¹ adds : कृमीणां पशूनां च । 22 B and Tib omit शाक- । 23 Mss, Tib & Ch² -वारि- । Ch¹ reads : ज्येष्ठा governs just as कृत्तिका and मृगशिरा *i. e.* ज्येष्ठा राजेन्द्राणां कान्तारवासिनां च ।

मूला पथिकानां[1] । पूर्वाषाढा वाह्लीकानां च[2] । उत्तराषाढा काम्बोजानां[3] । अभिजित्सर्वेषां[4] दक्षिणापथिकानां ताम्रपर्णिकानां[5] च । श्रवणा घातकानां[6] चौराणां च[7] । धनिष्ठा कुरुपाञ्चालानां[8] । शतभिषा मौलिकाना[9] माथर्वणिकानां[10] च । पूर्वभाद्रपदा गन्धिकानां[11] यवनकाम्बोजानां[12] च । उत्तरभाद्रपदा गन्धर्वाणां । रैवती नाविकानां च[13] । अश्विनी अश्ववाणिजानां च[14] । भरणी भद्रपदकर्मणां[15] भद्रकायकानां[16] च ।

अयं भोः पुष्करसारिन्नक्षत्राणां स्थाननिर्देशव्याकरणो[17] नामाध्यायः[18] । पठ भोस्त्रिशङ्को ऋतुवर्षं नामाध्यायं । तदहं वक्ष्ये श्रूयतां । कथयतु भगवान्[19] ।

कृत्तिकासु ग्रीष्माणां पश्चिमे मासे [20]यद्यत्र देवः प्रवर्षति[21] चतुःषष्ट्याढकानि[22] प्रवर्षति । [23]वर्षो दशरात्रिकः । श्रवणायुक्तप्रोष्ठपदायाम्[24] अग्रोदको वर्षारात्रो भवति । पश्चाद्वर्षं संजनयति[25] । हेमन्ते ग्रीष्मे त्रीणि चात्र

---

1 Mss omit this sentence. Tib : *'dron. po. rnams. la. gnas. so.* 2 Tib omits च । Ch[1] पूर्वा...... आरोहकाणां । Ch[2] तुखाराणां । 3 B -जीयानां । P -जीनां । Ch[1] उत्तरा same as above ( *viz.* आरोहकाणां- ) । Ch[2] omits उत्तराषाढा । 4 B omits सर्वे- । 5 Ch[1] "Thieves wearing red garments" ( for ताम्र- ) । It adds : विदूषकाणां च । Ch[2] adds अङ्गमगधानां च । 6 Mss दूतका- । Tib दूत- । 7 Ch omit this sentence. 8 Mss -पालानां । Ch[1] ? P adds च । 9 Tib कौशिका- । 9-10 Ch[1] "governs medical practitioners & diviners". It adds here गन्धिकानां and omits पूर्वभाद्रपदा । Ch[2] ओषधीनां तीर्थिकानां च । 11 Tib गन्धर्वाणां । 12 Mss -जीनां । 11-12 Ch[2] महाचीनानां । 13-14 Tib omits च । 15 Tib omits । 15-16 Ch[1] कर्षकाणां । Ch[2] "Territories of subordinate rulers". 17 Tib omits व्याकरण । 18 Mss नक्षत्राणां व्याकरणस्थाननिर्देशनामा- । 19 Tib omits this sentence. 20-21 Tib omits. 22 Tib षष्ट्या- । 23 Mss सर्व- । 24 Mss -पदा । 25 Tib reads these two sentences thus : शुक्रे पुरःस्थिते निरन्तरं रात्रौ प्रवर्षतीति सम्यग् ज्ञेयं ।

भय[1] प्रग्रहाणि भवन्ति। अग्निभयं[2] शस्त्रभयं[3] चोदकभयं[3] च भवति। उक्तं कृत्तिकासु।

रोहिण्यां ग्रीष्माणां पश्चिमे[4] मासे यद्यत्र[5] देवः प्रवर्षति एकविंशत्याढकानि[6] प्रवर्षति। तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि[7]। एष च वर्षारात्रः सारोपरोधः[8] सस्यं च संपादयति[9]। द्वौ चात्र रोगौ प्रबलौ भवतः। कुक्षिरोगश्चक्षूरोगश्च। चौरबहुलाश्चात्र दिशो भवन्ति[10]। उक्तं च रोहिण्यां।

मृगशीर्ष ग्रीष्माणां पश्चिमे मासे[11] यद्यत्र[12] देवः प्रवर्षति चतुःषष्ट्याढकानि[13] प्रवर्षति। सारोपरोधो वर्षारात्रः[14]। पश्चाद्वर्षं संजनयति[15]। निक्षिप्तशस्त्राश्चात्र

---

1 Tib omits. 2 Tib : *ma* (*me* ?) *'i. stobs. shes.* ( Narthang : *ses.* ) *bya. bar. 'gyur. te.* 3 P & Translations omit. Ch[1] reads "By this constellation if it rains, it will widely spread on the earth—2 feet eight inches. Rain continues for ten days. If the summer months fall on श्रवणा and पूर्वभाद्रपदा and if there is rain, in autumn there will be flood. There will be ( fear of ) great fire." Ch[2] reads ; "By this constellation in the fifth month, it rains nine *drona* =36 आढक। It rains for ten days. So it is in the sixth & seventh months. As there is rain, there is plenty of ( five ) crops. In autumn and winter there is very little water. At that time, fire naturally burns ( the country )". 4 Ch[1] omits it. Ch[2] reads : "In the fifth month, it rains". 5 Tib यत्र। 6 Ch[1] : "Two feet one inch". Ch[2] "three द्रोण and 1½ pints". 7 Tib reads these two sentences thus : तत्र कृषिकर्म कर्तव्यं। तेन सफला वृक्षा धान्यसम्पन्नं च क्षेत्रं भवेत्। Ch[1] omits the second sentence. Ch[2] reads : "In high land there is want of water. In the low land there is harvest". 8 Mss सारोपधः। 9 Tib omits this sentence. Ch[2] reads in its place : "Crops are not sufficient." 10 Mss कुक्षिरोगश्चौरबहुलत्वं च। 11 Ch[1] omits पश्चिमे। Ch[2] "in the fifth month." 12 Tib यत्र। 13 Ch[1] "two feet eight inches" Ch[2] "nine *drona* and six pints". 14 Tib reads सफला वृक्षाः। 15 Tib : पश्चात् सम्यक् प्रवर्षतीति ज्ञातव्यं। 14-15 Ch[1] : "There will be flood in autumn." Ch[2] : "There will be crops in abundance."

राजानो भवन्ति । क्षेमिणः[1] सुनीतिकाश्च दिशो भवन्ति । मुदिताश्चात्र जनपदा भवन्ति[2] । उक्तं मृगशिरसि ।

आर्द्रायां ग्रीष्माणां पश्चिमे[3] मासे यद्यत्र[4] देवः प्रवर्षति अष्टादशाढकानि[5] प्रवर्षति । तत्र निम्नानि[6] कृषिकर्तव्यानि । स्थलानि परिवर्जयितव्यानि[7] । निश्चयश्च रक्षयितव्याः[8] । चौरबहुलाश्चात्र दिशो भवन्ति । निक्षिप्तशस्त्राश्च राजानो भवन्ति[9] । त्रयश्चात्र रोगाः प्रबला भवन्ति । ज्वरः श्वासो[10] गलग्रहश्च[11] । बालानां दारकदारिकाणां च मरणं भवति । इत्युक्तमार्द्रायां ।

पुनर्वसौ ग्रीष्माणां पश्चिमे[12] मासे यद्यत्र[13] देवः प्रवर्षति । नवत्याढकानि[14] प्रवर्षति । महामेघानुत्पादयति[15] । आषाढायां प्रविष्टायां मृदूनि[16] प्रवर्षति । अनन्तरं च निरन्तरेण प्रवर्षति[17] । निक्षिप्तशस्त्राश्च राजानो भवन्ति[18] । उक्तं पुनर्वसौ[19] ।

1 P -श्चानी- । 2 Tib : राजदण्डवर्जिताः क्षेमिणः सुखिनो मुदिता...... । Ch[1] "There will be no war. Roads will be safe without fear. People will live peacefully." Ch[2] "The state will be safe. Weapons will not be required. Country will be peaceful. There will be neither poor nor distressed people". 3 Ch[1] omits. Ch[2] "in the fifth". 4 Tib यत्र । 5 Ch[1] "eight inches". Ch[2] : "two *drona* and seven pints". 6 Tib omits. 7 Tib : "Less moist lands are to be abandoned". Ch[1] omits this sentence. Ch[2] "No harvest in the high land but plenty in the low land". 8 Tib omits this sentence. 9 Tib omits this sentence. Ch[1] "Weapons must be kept ready for defence". Ch[2] "The king of the country calls the army". 10 Tib reads : *tsha. ba* = fever. 11 Tib *lkog. nad.* Ch[2] adds one more *viz*, कफ । 12 Ch[1] omits. Ch[2] पश्चमे मासे ( it always omits ग्रीष्माणां ) । 13 Tib यत्र । 14 Ch[1] "four feet". Ch[2] "thirteen *drona* and five pints". 15 Ch omit this sentence. 16 Mss कोमुद्यानि Tib *bde. bar. 'bab. cin* ="It rains pleasently or mildly". 15-17 Ch[1] "All the year, there is plenty of showers. It rains for fourteen days continuously". Ch[2] "It rains from the fifth to the eighth month". 18 Ch[1] reads : "Wars break out one after another. There will be great killing". Ch[2] adds : "All of them are merciful. They do not kill". 19 P reads -वसु ऋतुः ।

पुष्ये ग्रीष्माणां पश्चिमे[1] मासे यद्यत्र[2] देवः प्रवर्षति द्वात्रिंशदाढकानि[3] प्रवर्षति । अत्र निम्नानि कृषिकर्तव्यानि । स्थलानि परिवर्जयितव्यानि[4] । व्यक्तं प्रधानवर्षाणि भवन्ति[5] । सस्यं च निष्पादयति[5] । ब्राह्मणक्षत्रियाणां च विरोधो भवति[6] । दंष्ट्रिणश्चात्र प्रबला भवन्ति । तत्र त्रयो रोगाश्च भवन्ति । गण्डाः पिटकाः पामानि च[7] । इत्युक्तं पुष्ये ।

अश्लेषायां ग्रीष्माणां पश्चिमे[8] मासे यद्यत्र[9] देवः प्रवर्षति एकविंशत्याढकानि[10] प्रवर्षति । तत्र निम्नानि कृषिकर्तव्यानि । स्थलानि परिवर्जयितव्यानि[11]। विषमाश्च वायवो वान्ति[12] । संविग्नाश्चात्र ज्ञानिनो राजानश्च[13] भवन्ति । एषो वर्षः सर्वसस्यानि सम्पादयति[14] । [15]जायापतिकानां[16] राजामात्यानां[17] च विरोधो भवति[18] । उक्तमश्लेषायां ।

मघायां ग्रीष्माणां पश्चिमे[19] मासे यद्यत्र[20] देवः प्रवर्षति चतुःषष्ट्याढकानि[21]

1 Ch[1] omits. Ch[2] पश्चमे । 2 Tib यत्र । 3 Ch[1] "one foot five inches". Ch[2] "four *drona* and eight pints". 4 Ch[1] omits this sentence. Tib शुष्कक्षेत्राणि and Ch[2] "high lands" for स्थलानि । 5 Tib नूनं दिवारात्रमुत्तमं सस्यं... । Ch[1] "If it rains in time, there will be good harvest in autumn". Ch[2] omits. 6 Ch[1] "There will be quarrel between the rich and the poor". Ch[2] "There will be quarrel among the people of different faiths". 7 Tib *'brum. bu. dan. 'brum. bu. phra. mo. dan. śu. b'o*. Ch[2] omits. 8 Ch[1] omits. Ch[2] पश्चमे । 9 Tib यत्र । 10 Ch[1] "2 feet one inch". Ch[2] "three *drona* one *tou* ( =ten pints ) and five pints". 11 Ch[1] omits this sentence. 12 Ch[2] "Wind and rain do not come in time." 13 Tib omits राजानः । Ch[2] "Kings are malicious ( *lit.* kings cherish poison at heart )". Ch[1] "There will be quarrel with the neighbouring state". 14 Mss भवन्ति । Ch[2] reads : "There is no harmony ( in the country ). Though sometimes it rains, crops are not abundant". 15 Mss add भार्या before जाया । 15-16 Tib omits. 17 Ch[2] omits राजा- । 18 Ch[1] omits this sentence. 19 Ch[1] omits. Ch[2] पश्चमे । 20 Tib यत्र । 21 Ch[1] "nine inches". Ch[2] "nine द्रोण and six pints".

प्रवर्षति। एषो वर्षः सर्वसस्यानि सम्पादयति। मृगपक्षिपशुमनुष्याणां[1] चात्र गर्भा विनश्यन्ति। जनमरणं चात्र भविष्यतीति। उक्तं मघायां।

पूर्वफल्गुन्यां ग्रीष्माणां पश्चिमे[2] मासे यद्यत्र[3] देवः प्रवर्षति चतुःषष्ट्या-ढकानि[4] प्रवर्षति। एषो वर्षः सर्वसस्यानि सम्पादयति। तच्च सस्यं जनयित्वा परचक्रपीडिता मनुष्या न सुखेनोपभुञ्जते[5]। पशूनां मनुष्याणां चात्र गर्भाः सुखिनो भवन्ति[6]। उक्तं पूर्वफल्गुन्यां।

उत्तरफल्गुन्यां ग्रीष्माणां पश्चिमे[7] मासे यद्यत्र[8] देवः प्रवर्षति अशीत्या-ढकानि[9] प्रवर्षति। एषो वर्षः सर्वसस्यानि च सम्पादयति। निक्षिप्तशस्त्राश्चात्र राजानो भवन्ति[10]। ब्रह्मक्षत्रिययोश्च विरोधो भवति[11]। क्षिप्रं च[12] अनीतिकाः प्रजा विनश्यन्ति[13]। चोक्तमुत्तरफल्गुन्यां।

हस्ते ग्रीष्माणां पश्चिमे[14] मासे यद्यत्र[15] देवः प्रवर्षति एकोनपञ्चाशदा-

---

1 Tib omits मनु-। Ch[1] "Those who are in the wombs die". 2 Ch[1] omits. Ch[2] reads पश्चमे। 3 Tib यत्र। 4 Tib अशीति-। Ch[1] "two feet seven inches". Ch[2] "nine *droṇa* and six pints". 5 Tib तानि च सस्यानि परबलैर्नीयन्ते। मनुष्या दुःखिनो भवन्ति। Ch[1] "Others will enjoy their harvest" ( Ch[2] supports the Text ). 6 Tib नश्यन्ति। Ch[1] omits पशूनां मनुष्याणां। It adds : "There will be lot of diseases for the people". 7 Ch[1] omits. Ch[2] पश्चमे। 8 Tib यत्र। 9 Tib एकोनषष्टि-। Ch[2] "twelve *droṇa* nine '*tou*' and one pint ( =91 pints )". Ch[1] reads : "Rains and good or bad results are just like those of पूर्वफल्गुनी"। 10 Ch[2] "The whole state is without army. There is no need of weapons. People live in peace. There is not a poor man ( in the country )". 11 Ch[2] "Brāhmaṇas quarrel among themselves." 12 Mss add नीतयो भवन्ति। 13 Ch[2] omits this sentence. 14-15 Tib & Ch readings differ as before.

ढकानि[1] प्रवर्षति । [2]देवश्च तद्यथा परिक्षिपति । पतितानि च सस्यानि जनस्यारसाग्राणि अनुदग्राणि अल्पसाराण्यल्पोदकानि । दुर्भिक्षश्चात्र भविष्यति[3] । उक्तं हस्ते ।

चित्रायां ग्रीष्माणां पश्चिमे[4] मासे यद्यत्र[5] देवः प्रवर्षति[6] चतुःषष्ट्याढकानि[7] प्रवर्षति । सारोपरोधस्ततः पश्चाद्वर्षं[8] संजनयति । निक्षिप्तशस्त्राश्च राजानो भवन्ति । मुदिताश्चात्र जनपदा भवन्ति । उक्तं चित्रायां ।

स्वात्यां ग्रीष्माणां पश्चिमे[9] मासे यद्यत्र[10] देवः प्रवर्षति[11] एकविंशत्याढकानि[12] प्रवर्षति । निक्षिप्तशस्त्राश्च राजानो भवन्ति[13] । चौराश्चात्र बलवत्तरा भवन्ति[14] । उक्तं स्वात्यां ।

विशाखायां ग्रीष्माणां पश्चिमे[15] मासे यद्यत्र[16] देवः प्रवर्षति अशीत्या-

1 Tib एकोनषष्टि- । Ch[1] "nine feet two inches". Ch[2] "seven *droṇa,* three *tou* and five pints ( =35 pints )". 2-3 Tib reads : तत्र एवं भवति । जना अनृतभाषिणो रोगप्रपीडिताश्च । फलानामल्पत्वादुदकाभावाच्च दुर्भिक्ष......... । Ch[1] "This year all the crops will be destroyed by birds. There will be scarcity of rain. In autumn there will be no harvest". Ch[2] "Afterwards rain stops. This year is inauspicious. There will be scarcity of crops. People will starve." 4 Ch as before. 5 Tib omits. 6 Tib adds तत्र । 7 Ch[1] "two feet three inches". Ch[2] "nine *droṇa* and six *tou* ( =60 pints )". 8 B adds सस्यं । Tib reads सारवद् ( *sñiṅ. po. daṅ. ldan* ) पश्चादपि वर्षति । Ch[1] reads : "There will be scarcity of rain ( *i. e.* सारोपरोधः ) । In autumn there will be much rain ( शरदि प्रभूतं वर्षं संजनयति )" । Ch[2] differs : "There will be plenty of crops". 9 Ch as before. 10 Tib omits ; it reads in its place *ñi. ma. la.* 11 Tib adds तत्र । 12 Ch[1] "two feet one inch". Ch[2] "three *droṇa,* one *tou* and five pints ( =15 pints )". 13 Ch omit. 14 Ch[1] adds : "There will be no difference between the high and the low". 15 Ch as before. 16 Tib यत्र ।

ढकानि[1] प्रवर्षति। एषो वर्षः सर्वसस्यानि सम्पादयति[2]। राजानश्चात्र छिद्र-युक्ता [3]भवन्ति। अग्निदाहाश्चात्र [4]प्रबला भवन्ति[5]। दंष्ट्रिणश्चात्र बलवन्तोऽपि क्षयं गच्छन्ति[6]। उक्तं विशाखायां।

अनुराधायां ग्रीष्माणां पश्चिमे[7] मासे यद्यत्र[8] देवः प्रवर्षति षष्ट्याढकानि[9] प्रवर्षति। एषो वर्षः सस्यं सम्पादयति। मित्राणि चात्र दृढानि भवन्ति[10]। उक्तमनुराधायां।

ज्येष्ठायां ग्रीष्माणां पश्चिमे[11] मासे [12]यद्यत्र देवः प्रवर्षति[12] षोडशाढकानि[13] प्रवर्षति। तत्र कृषिकर्मान्तानि प्रतिसंहर्तव्यानि[14]। युगवस्त्राणि वर्जयितव्यानि[15]। स्वधान्यानि उपसंहर्तव्यानि[16]। अग्नयः प्रतिसंहर्तव्याः[17]। लाङ्गलानि प्रति-संहर्तव्यानि[18]। अवश्यमनेन जनपदेन विनष्टव्यं भवति[19]। परचक्रपीडितो भवति[20]। उक्तं ज्येष्ठायां।

मूले ग्रीष्माणां पश्चिमे[21] मासे यद्यत्र[22] देवः प्रवर्षति चतुःषष्ट्याढकानि[23]

---

1 Tib पञ्चाशद्। Ch[1] "four feet". Ch[2] "twelve *droṇa*". 2 Ch[1] "Low and high lands (both) will have harvest". 3 Tib : राजानो जनाश्चात्र त्रासयुक्ता-। Ch[1] omits this sentence. Ch[2] reads : "All the states become strong". 4-5 Tib omits. 5 Ch[1] adds अस्त्राणि before अग्नि। 6 Ch[1] "Much damage is done by birds and beasts". Ch[2] "death of elephants." 7 Ch as before. 8 Tib omits यद्यत्र देवः प्रवर्षति। 9 Ch[1] "two feet". Ch[2] "nine *ho*". 10 Tib *lo. ma. rnams. rgyas. par. 'gyur te* =पत्राणि वर्धन्ते। Ch[1] "People have mutual conflict." 11 Ch as before. 12 Tib omits. 13 Ch[1] "one foot six inches". Ch[2] "two *droṇa* and four *tou* ( =40 pints )". 14 Tib omits कृषि। Ch[1] omits this sentence. 15-17 Tib omits these sentences. 18 Tib adds after this: अथ गन्तव्यम्। 19-20 Tib reads : परचक्रेण तज् जनपदो विनष्टव्यो भवति। 15-20 Ch[1] reads : "This year there will be many diseases. Riding on horses and elephants should be avoided. So also war". Ch[2] : "If fields are cultivated, nothing will grow. Children will die. Thieves coming from outside will do harm." 21 Ch as before. 22 Tib omits. 23 Ch[1] "one foot eight inches". Ch[2] "nine *droṇa* six *tou* ( 60 pints )".

प्रवर्षति। एषो वर्षः सस्यं सम्पादयति । चौरबहुलाश्चात्र दिशो भवन्ति । त्रयश्चात्र व्याधयो बलवन्तो भवन्ति[1] । वातगण्डः[2] पार्श्वशूलमक्षिरोगश्च । पुष्पफलानि चात्र समृद्धानि भवन्ति। निक्षिप्तशस्त्राश्चात्र राजानो भवन्ति। उक्तं मूले।

पूर्वस्यामाषाढायां ग्रीष्माणां पश्चिमे[3] मासे यद्यत्र[4] देवः प्रवर्षति[5] षष्ट्या-ढकानि[6] प्रवर्षति । द्वौ चात्र ग्राहौ[7] भवतः । प्रोष्ठपदे[8] वा ऽश्वयुजौ वा पक्षे। एषो वर्षः[9] सर्वसस्यानि सम्पादयति। द्वौ चात्र रोगौ प्रबलौ भवतः। कुक्षिरोगो-ऽक्षिरोगश्च। उक्तं पूर्वाषाढायां।

उत्तरस्यामाषाढायां ग्रीष्माणां पश्चिमे[10] मासे यद्यत्र[11] देवः प्रवर्षति[12] पूर्णमाढकशतं[13] प्रवर्षति । तत्र स्थलानि कृषिकर्तव्यानि। निम्नानि परिवर्जयि-तव्यानि[14]। महास्रोतांसि चात्र प्रवहन्ति। अग्रोदका चात्र वर्षा भवति[15]। सर्वसस्यानि निष्पादयति[16]। त्रयश्चात्र रोगाः प्रबला भवन्ति। गण्डः कच्छुः कण्ठरोग[17] इति । उक्तमुत्तराषाढायां।

अभिजिति ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति चतुःषष्ट्या-

1 Tib omits this sentence. 2 Tib reads: *pha. rol* (for *phol* =गण्ड)। Ch simply गण्ड or abscess. 3 Ch as before. 4-5 Tib omits. 6 Tib चतुःषष्टि-। Ch[1] "two feet". Ch[2] "nine *ho* (द्रोण) six *tou* (60 pints)" 7 Tib -ग्रहौ पूर्वंगमौ। Ch omit this sentence. 8 B omits वा। 8-9 Tib reads: अश्वयुजस्य वर्षा तत्र सर्वसस्या-। 7-9 Ch[1] "First there will be drought. Then there will be flood. In autumn there will be good harvest". Ch[2]: "There will be plenty of (five) crops. During the sixth and seventh months there will be great flood". 10 Ch as before. 11-12 Tib omits. 13 Ch[1] "seven feet". Ch[2] "fifteen *ho* (द्रोण)"। 14 B and Ch[1] omit this sentence. 15-16 Tib अग्र(प्रथम)वर्षा सर्वसस्या-। 14-16 Ch[1] "There will be much rain. सर्वसस्यानि (medicinal plants and paddy) निष्पा-।" Ch[2] "There will be heavy rain. All the rivers will be flooded. There will be sufferings caused by water (flood). The low lands will be destroyed. Only the high lands will grow (food)." 17 Tib अक्षिरोगः। Ch[1] गण्डः पिटकः पामः (=कच्छुः)। Ch[2] गण्डो वातरोगो नाभिरोगश्च।

ढकानि प्रवर्षति । मण्डलवर्षं च देवः प्रवर्षति[1] । पश्चाद् वर्षः सस्यं जनयति[2] । औदकानां भूतानामुत्सर्गो[3] भवति । उक्तमभिजिति[4] ।

श्रवणे तु ग्रीष्माणां पश्चिमे[5] मासे यद्यत्र[6] देवः प्रवर्षति[7] चतुःषष्ट्या-ढकानि[8] प्रवर्षति । मण्डलवर्षं च देवो वर्षति[9] । पश्चाद् वर्षा सस्यं[10] सम्पादयति[11] । औदकानां भूतानामुत्सर्गो[12] भवति । व्याधिबहुलाश्च नरा भवन्ति[13] । राजानश्च तीव्रदण्डा भवन्ति । उक्तं श्रवणे[14] ।

धनिष्ठायां ग्रीष्माणां पश्चिमे[15] मासे यद्यत्र[16] देवः प्रवर्षति[16] एक-पञ्चाशदाढकानि[17] प्रवर्षति । विभक्ताश्चात्र[18] वर्षा भवन्ति[19] । तत्र निम्नानि कृषिकर्तव्यानि । स्थलानि परिवर्जयितव्यानि[20] । दुर्मुखो रात्रौ वर्षो[21] भवति[22] । सस्यानि सम्पादयति[23] । एकश्चात्र रोगो भवति । गण्डविकारः[24] । शस्त्र-समादानाश्च राजानो भवन्ति । उक्तं धनिष्ठायां ।

शतभिषायां ग्रीष्माणां पश्चिमे[25] मासे यद्यत्र[26] देवः प्रवर्षति[26] षोडशा-

---

1 B मण्डलदेवा । P omits this sentence. 2 Mss पश्चाद्वर्षं जन- । 3 Mss -उपसर्गो । 4 Translations omit this paragraph. 5 Ch as before. 6-7 Tib omits. 8 Ch[1] "three feet". Ch[2] "nine *ho* ( द्रोण ), six *tou* ( 60 pints )". 9 Tib एकदेशे- ( for मण्डलवर्षं ) । Ch[1] "Rain does not come in time". Ch[2] "It rains now and then". 10 Mss छस्यं । 11 Tib *lit.* पश्चाद्वर्षः समृध्यति (or निष्पादयति)। Ch[1] "In autumn there will be flood." Ch[2] "crops grow". 12 Ch[2] "Dragons, ghosts, gods, birds and beasts living in water are destroyed". 13 Ch[1] omits this sentence. 14 Tib adds अभिजिति ( *gro. bshin. byi. yin. par. bstan* ). 15 Ch as before. 16 Tib omits. 17 Tib एकषष्टि- । Ch[1] "one foot seven inches". Ch[2] "seven *ho* ( द्रोण ), six *tou,* five *sheng* ( =65 pints )". 18 Tib *char. gle. gar. 'bab. pas* ="It rains at random". 19 Ch[1] omits this sentence. Ch[2] : "It rains as much as required, neither more nor less". 20 Ch[1] omits this. 21 Mss वर्षा । Tib omits. 22-23 Ch omit these sentences. 24 Tib : कच्छुः । 25 Ch as before. 26 Tib omits.

ढकानि[1] प्रवर्षति। तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि[2]। एषो वर्षः सर्वसस्यानि सम्पादयति[3]। चक्रसमारूढा[4] जनपदा भवन्ति। मनुष्या दारकदारिकाश्च स्कन्धे कृत्वा देशान्तरं गच्छन्ति। उक्तं शतभिषायां।

पूर्वस्यां भाद्रपदायां ग्रीष्माणां पश्चिमे[5] मासे यद्यत्र[6] देवः प्रवर्षति[7] चतुःषष्ट्याढकानि[8] प्रवर्षति। वर्षामुखे[9] चात्र एकोनविंशति[10]रात्रिकोऽवग्रहो भवति। पुष्पसस्यं च नाशयति[11]। एताश्च वर्षा[12] बहुचौरा भवन्ति[13]। द्वौ चात्र महाव्याधी भवतः। प्रथमं पित्ततापज्वरो भवति। पश्चाद्[14] बलवान् महाग्रहो[15] भवति। मर्त्यानां नारीणां च मरणं भवति[16]। उक्तं पूर्वभाद्रपदायां।

उत्तरस्यां भाद्रपदायां ग्रीष्माणां पश्चिमे[17] मासे यद्यत्र[18] देवः प्रवर्षति[19] पूर्णमाढकशतं[20] प्रवर्षति। महास्रोतांसि प्रवहन्ति। ग्रामनगरनिगमाः स्रोतसा उह्यन्ते[21]। चत्वारश्चात्र व्याधयः प्रबला भवन्ति। तद्यथा [22]कुक्षिरोगोऽक्षिरोगः

---

1 Tib किञ्चित्। Ch[1] "five inches". Ch[2] "three *ho* four *tou*". 2 Ch[1] omits. 3 Ch[2] "crops will not be sufficient". 4 Tib कटकपरिवेष्टिता। Ch[1] "There will be war within and outside the country". Ch[2] "People will live in fear and anxiety without peace". 5 Ch as before. 6-7 Tib omits. 8 Ch[1] "three inches". Ch[2] "nine *ho* six *tou*". 9 Tib ( Narthang ) *dus. dan. po'i. mtshan. mo* =प्रथम (वर्षा) रात्रौ। Dege reads : *dus. dan. po'i. mtshan. mo'i. sgo. nas.* =प्रथम (वर्षा) रात्रिमुखे। 10 Tib : एकोनत्रिंश-। 9-11 Ch[1] "First there will be drought वर्षामुखेऽवग्रहो भवति। Then there will be flood. पुष्पफलानि... ।" Ch[2] "In the first day of the fifth month, there is drought, then there is great flood पुष्पफलसस्यं... ।" 12 Tib तस्मिन् समये। 13 Ch[1] "In autumn, there will be famine. There will be many thieves". 14 Mss omit. 15 Mss महाविग्रहो। Ch[1] reads simply : 'Pestilence.' It omits द्वौ चात्र etc. Ch[2] "heart-disease and fever". It adds : "There is no unity ( or harmony ) among the ministers". 16 Ch[1] omits मर्त्यानां। Ch[2] "Elephants and domestic animals will die". 17 Ch as before. 18-19 Tib omits. 20 Ch[1] "four feet five inches". Ch[2] "fifteen *ho*". 21 Tib omits this sentence. Ch[1] "Houses break down". 22 Ch[2] अर्बुद "which makes a man's face yellow".

काशो ज्वरश्चेति । बालानां[1] दारकदारिकाणां मरणं भवति[2] । अत्र स्थलानि कृषिकर्तव्यानि । निम्नानि परिवर्जयितव्यानि[3] । एताश्च वर्षाः पुष्पाणि फलानि च सम्पादयन्ति[4] । उक्तमुत्तरभाद्रपदायां[5] ।

रेवत्यां ग्रीष्माणां पश्चिमे[6] मासे यद्यत्र[7] देवः प्रवर्षति[7] एकषष्ट्याढकानि[8] प्रवर्षति । तत्र निम्नानि कृषिकर्तव्यानि[9] । स्थलानि परिवर्जयितव्यानि[10] । एषा च वर्षा सर्वसस्यानि सम्पादयति[11] । तच्च सस्यं मित्रबान्धवा मनुष्याश्च परिभुञ्जते[12] । निक्षिप्तशस्त्रदण्डाश्च राजानो भवन्ति[13] । अनुद्विग्नाश्च जनपदा भवन्ति । उद्विग्नाश्च दानपतयो भवन्ति[14] । देवनक्षत्रसमायुक्ताश्च जनपदा भवन्ति[15] । मित्राणि समायुक्तानि भवन्ति[16] । उक्तं रेवत्यां ।

अश्विन्यां ग्रीष्माणां पश्चिमे[17] मासे यद्यत्र[18] देवः प्रवर्षति[18] अष्टचत्वारिंशदाढकानि[19] प्रवर्षति । यच्च मध्ये वर्षा भवति[20] । तत्र निम्नानि कृषिकर्तव्यानि । स्थलानि परिवर्जयितव्यानि[21] । एषा वर्षा सर्वसस्यानि सम्पादयति[22] ।

1 Tib omits. 2 Ch[2] adds : "Elephants and domestic animals die". 3 Ch[1] omits. Tib adds here : महाव्याधिर्मृत्युबहुलः । 4-5 P omits these sentences. 6 Ch as before. 7 Tib omits. 8 Tib षष्टि- । Ch[1] "three feet two inches". Ch[2] "nine *ho* and five *tou*". 9-10 Ch[2] omits. 10 Ch[1] omits. 11 Ch[2] adds "There will be harmony in every house". 12 Ch[1] omits this sentence. 13 Mss & Tib place this sentence before the preceding one. 14 Tib omits this. Ch[1] omits this and the preceding one. Ch[2] reads : "People are kind and charitable to one another". It omits the preceding sentence. 15 Tib and Ch[1] omit this. 16 Ch omit this. 17 Ch as before. 18 Tib omits. 19 Tib चतुश्चत्वा- । Ch[1] "one foot and two inches". Ch[2] "seven *ho* and two *tou*". 20 B मध्ये रात्रौ वर्षा रात्रौ भवति । P मध्यवर्षा रात्रौ भवति ( Tib omits रात्रौ ) । Ch[1] omits this. Ch[2] reads : "Before this month there will be drought and afterwards also there will be drought". 21 Ch[1] omits. 22 Tib द्वितीया वर्षा.. । Ch[1] omits this sentence. Ch[2] "Barley, rye and maize will ripen. There will be no paddy".

भयसमायुक्ताश्चात्र जनपदा भवन्ति[1] । चौराश्च प्रबला भवन्ति[2] । उक्त-मश्विन्यां ।

भरण्यां ग्रीष्माणां पश्चिमे[3] मासे यत्र[4] देवः प्रवर्षति पूर्णमाढकशतं[5] प्रवर्षति । तत्र स्थलानि कृषिकर्तव्यानि । निम्नानि परिवर्जयितव्यानि[6] । दुर्भिक्षश्चात्र भवति । जरामरणं जनानां भवति[7] । राजानश्चात्र अन्योन्य-घातका[8] भवन्ति । पुत्रपौत्राणां च कलहो भवति[9] । उक्तं भरण्यां ।

अयं भोः पुष्करसारिन्नक्षत्रर्तु[10]वर्षाध्यायः ।

अमीषां भोः पुष्करसारिन्नष्टाविंशतीनां नक्षत्राणां राहुग्रहे फलविपाकं व्याख्यास्यामि ।

कृत्तिकासु भोः पुष्करसारिन् यदि चन्द्रग्रहो भवति[11] कलिङ्गमगधानामुपपीडा भवति[12] । यदि रोहिण्यां चन्द्रग्रहो भवति प्रजानामुपपीडा भवति । यदि मृगशिरसि चन्द्रग्रहो भवति विदेहानां जनपदाना[13]मुपपीडा भवति । राजोपसेवकानां च[14] । एवमार्द्रायां पुनर्वसौ पुष्ये[15] च वक्तव्यं । अश्लेषायां यदि चन्द्रग्रहो भवति नागानां हैमवतानां[16] च पीडा भवति । यदि मघासु चन्द्रग्रहो भवति गौडिकाना[17]मुपपीडा भवति । यदि पूर्वफल्गुन्यां सोमो गृह्यते चौराणामुपपीडा

---

1 Tib पुरुषाः संहता भवन्ति । Ch² "( The inhabitants of ) the country will be courageous and equipped with arms for self-protection". Ch¹ omits. 2 Ch¹ "There will be war and robbery". Ch² adds "enemies". 3 Ch as before. 4 Tib यत्र । 5 Ch¹ "four feet". Ch² "fifteen *ho* ( *droṇa* )". 6 Ch¹ omits. 7 Tib & Ch² omit जरा । Ch¹ omits this sentence. Mss जनपदानां for जनानां । 8 Tib अन्योन्यविग्रहा । Ch¹ "There will be war". Ch² "All the states will fight". 9 Tib पुत्रपुत्रीणां च मरणं- । Ch¹ पितापुत्राणां- । Ch² "Sons and grandsons will be afraid of one another". 10 Tib omits नक्षत्र । 11 Tib *lit.* कृत्तिका राहुयुक्ता भवेत्... । Ch² यदि कृत्तिका विपन्ना भवेत् । 12 Ch¹ चीनानामुप- । 13 Tib & Ch omit जनपद । 14 Ch² omits this sentence. Ch¹ reads : महामात्यानां । It omits विदेहानां जन- । 15 Ch¹ omits पु- । Ch² reads : आर्द्रायां भौटानां ब्राह्मणानां च पुनर्वसौ श्रेष्ठिनां ( families having gold and jewels ) । पुष्ये चीनानां । 16 Ch¹ *lit.* पार्वतीयानां । Ch² "of rain, snow ( हैमवत ? ) and dragons ( नागानां )" । 17 Ch² "of the weavers".

भवति। यद्युत्तरफल्गुन्यां सोमो गृह्यतेऽवन्तीना[1] मुपपीडा भवति। यदि हस्तेषु सोमो गृह्यते सौराष्ट्रिकाणा[2] मुपपीडा भवति। यदि चित्रायां सोमो गृह्यते पक्षिणां द्विपदानां[3] च पीडा भवति[4]। यदि स्वात्यां[5] सोमो गृह्यते सर्वेषां प्रव्रज्यासमापन्ना[6] नामुपपीडा भवति। यदि विशाखायां[7] सोमो गृह्यते औदकानां सत्त्वाना[8] मुपपीडा भवति। यद्यनुराधासु सोमो गृह्यते वणिजाना-मुपपीडा भवति शाकटिकानां[9] च। यदि ज्येष्ठायां सोमो गृह्यते दौवालिकानां[10] पीडा भवति। यदि मूले सोमो गृह्यतेऽश्वगानां[11] पीडा भवति[12]। यदि पूर्वाषाढायां सोमो गृह्यतेऽवन्तीनां[13] पीडा भवति। यद्युत्तराषाढायां सोमो गृह्यते काम्बोजकानां[14] पीडा भवति। वाह्लीकानां च[15]। यद्यभिजिति सोमो गृह्यते दक्षिणापथिकानां पीडा भवति। ताम्रपर्णिकानां च[16]। यदि श्रवणेषु सोमा गृह्यते चौराणां घातकानां[17] चोपपीडा भवति[18]। यदि धनिष्ठायां सोमो गृह्यते कुरुपाञ्चालानां[19] पीडा भवति। यदि शतभिषायां सोमो गृह्यते मौलिकाना[20]-माथर्वणिकानां[21] च पोडा भवति। यदि पूर्वभाद्रपदायां सोमो गृह्यते गान्धिकानां[22] यवनकाम्बोजकानां[23] च पीडा भवति[24]। यद्युत्तरभाद्रपदायां सोमो गृह्यते

1 Ch¹ "Those who are near a dam ( अप् अन्त )"। 2 Ch¹ "a well-guarded city". 3 Ch¹ omits. Ch² reads आरण्यकानां। 4 Tib (Narthang) omits this sentence. 5 Tib ( Narthang ) चित्रायां। 6 Ch¹ गृहस्थानां ( Those who have wives )। 7 P reads -हस्तेषु। 8 Ch² ऐन्द्र-जालिकानां। 9 B and Tib omit this word. 10 Mss, Tib & Ch² -रिका-। Ch¹ reads "The result will be same as in Mṛgaśiras" *i. e*, विदेहानां पीडा-। 11 Tib : *'dron. pa. rnams.* 12 Ch¹ मृत्युर्भवति-। 13 वाह्लीकानां ?? Ch¹ "Those who ride on horses and elephants will fall". Ch² तुखाराणां। 14 Mss काम्बोजिका-। 15 B omits. Tib reading is indistinct. Ch¹ "The result is the same as in पूर्वाषाढा"। Ch² omits उत्तराषाढा। 16 Ch¹ reads प्रव्रज्यासमापन्नानां च। Ch² ( ताम्रपर्णिक ).... ? अङ्गमगधानां। 17 Mss ह्यात्त्कानां। Tib omits. 18 Ch¹ अमित्रचौराणां ध्वंसोऽश्वपालानां चाङ्गहानिर्भवति। Ch² omits this sentence. 19 Ch¹ उत्तर-पथिकानां विनाशो-। 20 Tib स्वर्णवणिजानां। Ch¹ omits. Ch² ओषधीनाम्। 21 Tib omits. Ch² तीर्थिकानां। 22-23 Ch² महाचीनानां। 23 Ch¹ मणिकाराणां। 24 Tib omits this sentence. P reads : गन्धिकानां पीडा भवति। यवनकाम्बोजीनां च।

गन्धर्वाणां पीडा भवति । यदि रेवत्यां सोमो गृह्यते नाविकानां[1] पीडा भवति[2] । यद्यश्विन्यां सोमो गृह्यतेऽश्ववणिजानां पीडा भवति[3] । यदि भरण्यां सोमो गृह्यते मरुकच्छानां[4] पीडा भवति ।

एवं[5] भोः पुष्करसारिन्[6] यस्मिन्नक्षत्रे चन्द्रग्रहो भवति तस्य तस्य देशस्य पीडा भवति[7] । [8]इत्युक्तो राहुग्रहफलविपाकाध्यायः ।

प्रतिनक्षत्रवंशशास्त्रे यथोक्तं कर्म तच्छृणु[9] ।
उच्यमानमिदं[10] विप्र ऋषीणां वचनं यथा ।
षट्तारां कृत्तिकां विद्यादाश्रयं[11] तासु कारयेत् ।
अग्न्याधानं पाकयज्ञः[12] समृद्धिप्रसवश्च यः[13] ॥
सर्पिर्विलोडयेत्तत्र[14] गवां वेश्म च कारयेत्[15] ।
अजैडकाश्च क्रेतव्या गवां[16] च वृषमुत्सृजेत्[17] ॥
अश्मसारमयं[18] भाण्डं सर्वमत्र तु[19] कारयेत् ।
हिरण्यकारकर्मान्तमिष्वस्त्रं चोपकारयेत्[20] ॥
मैत्रको[21] मापयेदत्र[22] कुटिकाग्निनिवेशनं[23] ।
पीतलोहितपुष्पाणां बीजान्यत्र तु वापयेत्[24] ॥

1 Ch[2] *chiang t'ai [ch'uan]*. 2 Ch[1] "no profit". 3 Ch[1] -मृत्युर्भवति । 4 Tib *shin. bzan. po. rnams.* Ch[1] कर्षकाणां- । Ch[2] "The territories of rulers who owe allegiance to the supreme sovereign". Mss disagree with : भरणी भद्रपदकर्मणां भद्रकायकानां च । *Vide* p. 68. 5 P अयम् । 6 Mss add एवं सर्वाणि । 7 Tib omits this sentence. 8 Tib adds भोः पुष्कर- । 9 Tib *rgyu. skar. so so'i. las. kyi. dgos. pa. bśad. pa. khoṅ. du. chud. par bya ste.* प्रतिनक्षत्रे प्रयोजनीयं कर्म व्याख्यास्यामि तदवगम्यतां । 10 Mss -अयं । Tib नक्षत्रे यत्कर्म । 11 Tib अग्निकार्यं च... । 12 Tib होम । 13 Tib omits it. 12-13 Ch[1] "sacrifices and appointment ( of officers )". 14 B सोपि विलोपयेत्तत्र, P सापि विञा- । Tib दध्नश्च मन्थनात्सर्पिः । Ch[1] omits. 15 Ch[1] "Repair houses". 16 Tib omits. 17 Tib *ba. glaṅ. dgye. bar. bya'o*=The bull is to be tamed (?). 16-17 Ch[1] "should buy and train horses and cattle." 18 Ch[1] अश्मस्वर्णमयं । 19 Mss स्पर्शमात्रं न- । 20 Ch[1] omits this line. 21 Mss मेत्ताककर् । 21-22 Tib & Ch[1] omit. 23 Ch[1] "Make a hot-house." 24 Ch[1] "Plant flower trees".

गृहं च[1] मापयेदत्र तथा[2] ऽवासं प्रकल्पयेत्[3] ।
नवं च[4] छादयेद्वस्त्रं क्रयणं[5] नात्र कारयेत् ॥
क्रूरकर्माणि सिध्यन्ति युद्धसंरोधबन्धनम्[6] ।
परपीडामथात्रैव विद्वान्नैव प्रयोजयेत्[7] ॥
शस्त्राणि क्षुरकर्माणि[8] सर्वाण्यत्र तु कारयेत् ।
तैजसानि च भाण्डानि[9] कारयेच्च क्रीणीत[10] च ॥
आयुष्यं च शिरःस्नानं स्त्रीणां विष्कम्भणानि[11] च ।
प्रवर्षणं चेद्[12] देवस्य नात्र वैरं प्रशाम्यति[13] ॥
क्रोधनो हर्षणः शूर[14] स्तेजस्वी साहसप्रियः[15] ।
आयुष्मांश्च यशस्वी[16] च यज्ञशीलोऽत्र जायते ॥ कृत्तिकासु ॥

सर्वं कृषिपदं कर्म रोहिण्यां संप्रयोजयेत् ।
क्षेत्र[17]वस्तुविहारांश्च[18] नवं[19] वेश्म च कारयेत् ॥
प्रयोजयेच्चक्रान् वारान्[20] दासांश्चैव[21] गृहे पशून्[22] ।
वापयेत्सर्वबीजानि[23] ध्रुवं वासांसि कारयेत् ॥

1 Mss न । 2 Mss नावासं । 1-2 Tib & Ch[1] have no negative here. 3 Ch[1] "Shift to a (new) house and take bath". 4 Mss न । 5 Mss क्रीणायां । Tib : मूल्यैः क्रयं न कारयेत् । Ch[1] वयनं । 6 Mss -न्धनाः । Tib विग्रह for संरोध । Ch[1] "One should not have litigation." 7 Ch[1] omits this line. 8 B कुल-, P कुरु । Tib *spu. gri. bya. ba. dan. bca'a. ba* =मण्डनं क्षुरकर्माणि । Ch[1] simply : "Roads should be made." 9 Tib *me. dan. ldan. pa'i* (=तैजस) *snod.* 10 Tib omits. 9-10 Ch[1] "One should have gold, silver, brass and iron utensils". 11 =विलास, शृङ्गार ( Tib *sgeg. pa* ). Ch[1] omits this line. 12 Mss च । 13 Tib : *ñi. ma. de. la. char. bab. na. dgra. ldan. shin*=प्रवर्षणं चेद् देवस्य तर्हि स दिवसो वैरसंप्रयुक्तो भवति । Ch[1] "If there is rain on that day, it will not be widely spread." 14 P सौरः । 14-15 Tib रौद्रकर्मारम्भी, तस्कर-ताडनकुशलः ( *rkun. ma. 'gyed. par. bzan. shin* ) 15 Ch[1] क्रोधनो रणकुशलः । 16 Ch[1] omits it. 17 Tib & Ch[1] omit. 18 Ch[1] omits वस्तु and reads विवाह for विहार । 19 Mss वरं । Ch[1] omits. 20 चक्रान् (troop) वारान् ( multitude ). Mss -क्राम्वारा । Tib : *bdag. ñid. kyis. drag. šul. bya. dgos. pa. rnams. dan.* Ch[1] omits. 21 Tib & Ch[1] omit. 22 Tib पशूनां वासगृहं । Ch[1] "should domesticate animals". 23 Ch[1] omits.

ऋणं न[1] दद्यात्तत्रैव वैरमत्र तु वर्धते[2] ।
संग्रामं[3] च सुरायोगं[4] द्वयमेव[5] विवर्जयेत् ॥
प्रवर्षणं च देवस्य जन्म चात्र प्रशस्यते ।
सानुक्रोशः क्षमायुक्तः [6]स्त्रीकामो भक्षलोलुपः ।
आयुष्मान् पशुमान्[7] धन्यो[8] महाभोगोऽत्र जायते ॥ रोहिण्यां ॥

सौम्यं मृगशिरो विद्याद् ऋजु[9] तिस्रश्च तारकाः[10] ।
मृदूनि यानि कर्माणि तानि सर्वाणि कारयेत्[11] ।
यानि कर्माणि रोहिण्यां तानि सर्वाणि कारयेत्[12] ॥
सक्षीरान् वापयेद् वृक्षान् बीजानि क्षीरवन्ति च[13] ।
राजप्रासादवलभीछत्राण्यपि च कारयेत्[14] ॥
सर्वकर्मकथाः कुर्याच् चर्यावासांश्च[15] कारयेत् ।
उष्ट्रांश्च[16] बलीवर्दांश्च दमयेदपि कृष्टये[17] ॥
आच्छादयेन्नवं[18] वासश्चालङ्कारं च[19] कारयेत् ।
द्विजातीनां तु कर्माणि सर्वाण्येवात्र कारयेत्[20] ॥
प्रवर्षणं च देवस्य सुवृष्टिं चात्र निर्दिशेत् ।
स्वप्नशीलस्तथा त्रासी[21] मेधावी स च जायते ॥ मृगशिरसि ॥

---

1-2 Ch[1] is not clear. 3 Mss बीजग्रामं । Tib उत्सवं । 4 Ch[1] "brewing wine." 5 B स्वयमेव, P स्व- । 6 Ch[1] omits. 7 Ch[1] omits 8 Tib धनधान्यवान्; Ch[1] omits. 9-10 Tib *tshegs. chuṅ. ṅus. khyad. par. du. 'phags. pa. daṅ.* 9-12 Ch[1] omits. 13 Ch[1] "Plant trees." 14-15 Tib reads : *rgyal. po. rgyal. sar. 'jug. pa. daṅ. gnas. kyi. don. du. 'gro. ba. daṅ.* Ch[1] "One should do marketing, send messengers, plaster houses ( प्रेषणमुपलेपनं ) ( plant trees ) build houses, palaces, construct (or repair) roads." 15 Mss -न । 16 Tib गजाश्वान् । 17 Mss सृष्टयः । Tib *mchog. tu. bzaṅ. ṅo.* =उत्कर्षाय । Ch[1] omits this line. 18 Ch[1] पुरातनं । 19 Tib न । 20 Ch[1] reads "should offer sacrifices to gods." 21 Ch[1] adds महाकाम ।

आर्द्रायां मृगयेदर्थान् भद्रं कर्म[1] च कारयेत्[2] ।
क्रूरकर्माणि सिध्यन्ति तानि विद्वान् विवर्जयेत्[3] ॥
उदपानपरीखांश्च तडागान्यत्र कारयेत् ।
ऊहेत(ऊहयेत्)[4] प्रथमां[5] वृष्टिं[6] विक्रीणीयाच्च नात्र गां[7] ।
तिलपीडानि कर्माणि शौण्डिकानां तथापणं[8] ॥
[9]पीडयेदिक्षुदण्डानि[10] इक्षुबीजानि वापयेत्[11] ।
प्रवर्षणं च देवस्य विद्याद् बहुपरिस्रवं[12] ।
क्रोधनो[13] मृगयाशीलो मांसकामो[14]ऽत्र जायते ॥ आर्द्रायां ॥

पुनर्वसौ तु युक्तेऽत्र कुर्याद्वै व्रतधारणं[15] ।
गोदानं[16] चोपनायनं[17] सर्वमत्र[18] प्रसिध्यति ॥
प्रजायमानां[19] प्रमदां गृहीत्वा गृहमानयेत्[20] ।
पुनः पुनर्यदीच्छेत तत्र[21] कर्माणि कारयेत्[22] ॥

---

1 Mss सर्वं तत्र । 2-3 Ch[1] *i ying tse lien.* 4 Mss औहयेत् । 5 Mss मं । 6 Mss सृ- । 4-6 Tib & Ch[1] omit. 7 Ch[1] "should buy young cows". Tib : *ba. thul. sar. ma. ño. na. 'grub*="should buy young ( new ) tamed cows". Mss add before this line : द्विजातीनां च कर्माणि सर्वाण्येव हि कारयेत् । प्रवर्षणं च देवस्य सुवृष्टिं तत्र निर्दिशेत ॥ 8 Mss शौण्डानां घन-मापनं । Ch[1] "( Press sesame ) make wine". Tib : *mar. khu.* ( =घृत ) *btsir. ba'i. las dan* ( पीडानि कर्माणि ) *chan. btso. na ba dan*="distilling wine is dangerous". 9 Mss दीयते भिक्षु- । Ch[1] पीडयेदिक्षु- । 9-10 Ch reading is adopted here. Tib omits. 11 Ch[1] reads : रौद्रकर्माणि वर्जयेत् । 12 Mss -श्रमं । 13 Ch[1] omits. 14 Tib omits. 15 Mss पूर्णधारणं । Tib *la ( kha ? ) dog. bcan. par. bya. ba* -धारणं । Ch[1] "Make pots ( घट )" । 16 B गायनं, P गोयनं । Tib : *ba. lan. sbyin. pa* =गो =(bullock) -दानं । Ch[1] क्षौरकर्म । 17 Mss चोपपानं । Tib चूडाकरणं । Ch[1] शीलसमादान =initiation ( उपनयन ) । 18 Tib सर्वमन्त्रः । Ch[1] omits. 19 Tib सन्तानकामां । 20 Tib *chun. ma. blan* =उद्वहेत (भार्या-परिग्रह) । 19-20 Ch[1] "Shift to another house". 21 Mss "-दीच्छेत्तत्तत्र Tib *lit.* -र्यानि इच्छेत् तानि कर्माणि । 22 Ch[1] omits this line.

चिकित्सनं न कुर्वीत[1] यदीच्छेन्न पराभवं[2] ।
प्रवर्षणं च देवस्य[3] जन्म चात्र प्रशस्यते[4] ॥
अलील[5] श्चात्र जायेत स्त्रीलोलश्चापि मानवः ।
चित्रशोलश्च[6] नैकत्रार्पितचित्तः स उच्यते[7] ॥ पुनर्वसौ ॥

धन्यं[8] यशस्यमायुष्यं पुष्ये नित्यं प्रयोजयेत्[9] ।
सर्वेषां[10] च द्विजातीनां सर्वकर्माणि कारयेत्[11] ॥
राजामात्यं प्रयुञ्जीत शुश्रूषां विनयं चरेत्[12] ।
राजानमभिषिञ्चेच्[13] च अलंकुर्यात्स्वकां तनुं ॥
श्मश्रुकर्माणि कुर्याच्च वपनं[14] नखलोमतः[15] ।
पुरोहितं च कुर्वीत ध्वजाग्रं[16] च प्रकारयेत्[17] ॥
प्रवर्षणं च देवस्य मन्दवर्षं समादिशेत्[18] ।
न च रोगो न चौरश्च[19] क्षेमं चात्र सदा भवेत् ॥
पुष्येण नित्ययुक्तः सन्[20] सर्वकर्माणि साधयेत्[21] ।
वैरेणात्रोपनाहैश्च[22] ये जना[23]स्तान् विवर्जयेत्[24] ।
आयुष्मांश्च यशस्वी[25] च महाभोगः[26] प्रजायते ॥ पुष्ये ॥

1 Ch[1] "should not take medicine". 2 Tib *gal. te 'chi. ba'i..gyo. (gso) ba'i las* =चिकित्सनं न कुर्वीत यद्यस्ति मरणाद्भयं । 3 Tib omits (this *pāda*). Ch[1] puts प्रशस्यते here. 4 Ch[1] "one who is born on this day". 5 =without amusements (लीला)। Tib स्वल्पकाम (भोग)। Ch[1] स्वल्पभोजन (भोग)। 6 Tib "One who knows many things". Ch[1] "One who is fond of doing many things". 7 Mss -त्र प्रियचित्तवदुच्यते। Tib reading is adopted here. Ch[1] omits. 8 Tib पुण्यं। 9 Mss -ष्ये तु निःप्र- Tib -ष्ये नित्यमाराधयेत्। 10 Tib omits. 8-11 Ch[1] "It is proper to take good medicine (for आयुष्यं) put on new cloth, take bath, offer sacrifices (द्विजातीनां ... कर्माणि)"। 12 Ch[1] omits the 4th *pāda*. 13 Ch[1] omits. 14-15 Tib तत्र यो हि विचक्षणः। 16-17 Tib *rgyal. mtshan. gzug (s)* =ध्वजाग्रं च। Ch[1] reads (for this line): "Construct buildings." 18 Ch[1] omits this line. Tib अशिववर्षं or कुवृष्टिं for मन्द-। 19 Mss न च दोषो (P षा) न चोत्साह (P हा):। 20 Tib simply पुष्ये। 21 P कारयेत्। 22 Mss वैराण्यत्रोपनाहाश्च। 23 Tib युक्ता। 18-24 Ch[1] omits. 25-26 Ch[1] विचक्षण, भद्र।

सिध्यते दारुणं कर्म अश्लेषायां च कारयेत्[1] ।
कुर्यादाभरणान्यत्र[2] प्राकारमुपकल्पयेत् ॥
देहबन्धं[3] नदीबन्धं सन्धिकर्म[4] च कारयेत्[5] ।
प्रभूतदंशमशकं वर्षं मन्दं च वर्षति[6] ।
क्रोधनः[7] स्वप्नशीलश्च कुहक[8] श्चात्र जायते ॥ अश्लेषायां ॥

मघासु सर्वधान्यानि वापये[9] त्संहरेदपि[10] ।
संघातकर्म कुर्वीत सुमुखं चात्र कारयेत्[11] ॥
कोष्ठागाराणि कुर्वीत फलं चात्र निवेशयेत्[12] ।
सर्वदा पितृदेवेभ्यः[13] श्राद्धं चैवात्र कारयेत् ॥
सस्यानां बहुलीभावो यदि देवोऽत्र वर्षति ।
सुहृच्च[14] द्वारिकश्चैव[15] रसकामश्च[16] जायते ।
आयुष्मान् बहुपुत्रश्च[17] स्त्रीकामो भक्तलोलुपः ॥
संग्रामं जीयते[18] तत्र यदि पूर्वं प्रवर्तते[19] ।
दारुणानि च कर्माणि तानि विद्वान् विवर्जयेत् ॥ मघासु ॥

---

1 Tib ( यदि ) कृतं भवेत् । 2 Ch[1] "Do marketing". 3 Translations omit. 4 Tib omits. Ch[1] reads it afterwards. 3-5 Tib *rdzin. dan. lam. bcad. pa. bzan. no* : तडागं कारयेत्तत्र कारयेन मार्गबन्धनं । Ch[1] reads dam and bridge both ( for नदीबन्ध ) । 6 Ch[1] : "When it rains there are many mosquitoes ( मशक ) ; after the rain has stopped, there are a few दंश" । 7 Ch[1] omits. 8 Tib omits. Ch[1] adds स्वल्पायुः । 9 Tib *'bru. thams. cad. kyi. s. bon. bya. ba* ( *lit*. सर्वधान्यानां बीजं कर्तव्यं ) after this it reads : *bsdu. bar. bya. ba. dan* = संहरेदपि । 10 Ch[1] omits. 11 Tib : *sa. bon. gzugs. pa. dan* ( बीजवपनं च ) for the whole line. 12 Tib सस्यं for फलं । 11-12 Ch[1] "Make storehouses, make compromise ( संधिकर्म ) with foes. Cultivate a species of rue and make plough [ हलं (फलं) चात्र निवेशयेत् ? ]". 13 Tib पितृकार्यं च । 14-15 Tib ज्ञातिषु भक्तिमान् । Ch[1] "One who loves his relations". 16 Ch[1] omits. 17 Ch[1] omits. 18 Mss जायते । 19 Ch[1] "Whenever he (who is born under this constellation ) fights, he wins".

फल्गुनीषु च पूर्वासु सौभाग्यार्थानि कारयेत्[1] ।
विशेषादामलक्यादि[2] फलानामुपकारयेत् ॥
कुमारीमङ्गलार्थानि स्नापनानि च कारयेत्[3] ।
कन्याप्रवहनार्थाय[4] विहारं चैव कारयेत् ॥
वेश्मानि कारयेत्तत्र वश्य(वैश्य)मत्र प्रयोजयेत्[5] ।
भागं ये चोपजीवन्ति तेषां कर्म प्रयोजयेत्[6] ॥
अव्यक्तकेशोऽकेशः[7] सुभगश्चात्र जायते ।
प्रवर्षणं च देवस्य सुवृष्टि[8] मभिनिर्दिशेत् ।
नष्टं विद्धं कृतं चापि न तदस्तीति निर्दिशेत्[9] ॥ पूर्वफल्गुन्यां ॥

उत्तरायां तु फल्गुन्यां सर्वकर्माणि कारयेत्[10] ।
मेधावी दर्शनीय[11]श्च यशस्वी[12] चात्र जायते ॥
अथात्र नष्टं दग्धं[13] वा सर्वमस्तीति निर्दिशेत् ।
प्रवर्षणं च देवस्य विद्यात्संपदनुत्तमां ॥ उत्तरफल्गुन्यां ॥

1 Tib कृषिकर्माणि कारयेत् (*lit.* प्रार्थयेत्) । Ch[1] अलंकाराणि... । 2 Mss विशेषतुल्यामलकी । Tib *lit.* आमलकादिफलविशेषतुल्यानां कर्म कारयेत् । 1-3 Ch[1] "Put on pure and new cloth, plant fruit trees, establish market". 4 Mss -प्रवाहना- । Tib Narthang: "Carry out great man's order". Dege: *bag. phebs. par. bya. ba* =*bag. ma. phebs* ? =to approach a bride ? 5 Tib omits this *pāda*. Mss वैश्य(वेश्म ?)मन्त्रान्- । 4-5 Ch[1] सौभाग्यार्थानि कारयेत् । "Repair houses and employ servants". 6 Ch[1] omits this line. Tib *skal. ba. daṅ. ldan* =सुभगं for भागं । 7 Mss -केशा(च)केशेषु । Ch[1] "one with a few hairs". Tib reading seems to be corrupted. It reads: *byis. pa'i. skra. bkru. ba. daṅ. skra. mdzes. par. bya. ba daṅ*= "The hair of the baby is to be washed and ornamented". 8 Ch[1] सुशस्यं । 9 Translations omit this line. 10 Tib adds here: *khaṅ. pa. rñiṅ. pa. gso. ba. la. sogs. pa. thams. cad. by.'o* जीर्णानां गृहाणां संस्कारादि सर्वं कारयेत् । 11 Tib omits. 12 Mss तेजस्वी । Ch[1] *lit.* विशिष्टः । 13 Tib *byin mi (ni ?). ñams. śiṅ* दत्त- ? Ch[1] omits it.

हस्तेन लघुकर्माणि सर्वाण्येव प्रयोजयेत्[1] ।
सर्वेषां च द्विजातीनां सर्वकर्माणि कारयेत्[2] ॥
हस्त्यारोहं[3] महामात्रं[4] पुष्करिणीं च कारयेत् ।
चौर्यं च सिध्यते तत्र तच्च विद्वान् विवर्जयेत्[5] ॥
प्रवर्षणं च देवस्य वर्षा विश्रावणी भवेत् ।
अथात्र जातं[6] जानीया [7]च्छूरं चोरं विचक्षणं[8] ।
कुशलं सर्वविद्यासु[9] अरोगं[10] चिरजीविनं[11] ॥ हस्ते ॥

चित्रायामाहतं वस्त्रं भूषणानि च कारयेत्[12] ।
राजानं भूषितं[13] पश्येत् सेनाव्यूहं च दर्शयेत्[14] ॥
हिरण्यं रजतं द्रव्यं[15] नगराणि च मापयेत् ।
अलङ्कुर्यात्तथात्मानं गन्धमाल्य[16] विलेपनैः[17] ॥
गणकानां च विद्यां च[18] वाद्यं नर्तनगायनं ।
पूर्विकां रूपकारांश्च रथकारांश्च शिक्षयेत्[19] ।
चित्रकरांश्च[20] लेखकान् पुस्तकर्म[21] च कारयेत्[22] ॥

---

1 Ch[1] "Under this ( हस्त ) everything is auspicious". 2 Ch[1] omits this line. 3 Ch[1] "Horses and elephants should be domesticated". 3-4 Tib हस्ति-गन्धहस्त्यारोहं । 4 Ch[1] "a minister or a high official". 5 Ch[1] "Stealing is not profitable !" 6 B omits. 7 Mss द्यूतं ( indistinct ). 8 Ch[1] omits वि- । 9 Ch[1] बहुश्रुतं । 10 Mss आरोग्यं । 11 B -तं । 12 Tib भद्रं वस्त्रं छादयेत् तथा च ( आत्मानं ) भूषयेत् । Ch[1] supports the text. It reads : "One should cut cloth ( for making garments ) and......" 13 Mss भूषणं । 14 Tib सेनायोगं सुदर्शनं । Ch ( "Look at the army". ) It omits the third *pāda*. 15 Mss वाद्यं । 16 Tib धूप । 14-17 Ch[1] "Examine the store-house". 18 Mss गणकां चाथ विद्यांश्च नाट्यं । Tib : *yon. tan. kyi. las* =गुणकर्म । 19 Mss शिष्य- । 20 B चित्रकारां लेखकारान् । 21 Mss पूर्त- । 19-22 Tib reads these two lines as follows : *lder. so. [bzo] bya. ba. daṅ. bsruṅ. ba. daṅ rol. mo. daṅ. shal. shal. daṅ.* ( पुस्तकर्म ) *lag. gi. bzo. rnams. bya. bar. bzaṅ. ṅo* =प्रतिमां रक्षां सङ्गीतं पुस्तकर्म हस्तशिल्पं च कारयेत् । 17-22 Ch[1] "Play musical instruments. Drive cars and boats, sing and dance. Do plastering and make frescoes".

प्रवर्षणं च देवस्य चित्रवर्षं[1] विनिर्दिशेत् ।
मेधावी दर्शनीयश्च[2] चित्राक्षो[3] भक्तलोलुपः[4] ॥
मृदुशीलश्च[5] भीरुश्च[6] चलचित्तः[7] कुतूहली[8] ।
आयुष्मान् सुभगश्चैव[9] स्त्रीलोलश्चात्र जायते ॥ चित्रायां ॥

स्वात्यां प्रयोजयेद्योधान्[10] अश्वानश्वतरीं[11] खरान्[12] ।
क्षिप्रं गमनीयं[13] भक्ष्यं लड्डुकानध्वमानिकान्[14] ॥
भेरीमृदङ्गपणवान् मुरजान्[15] चोपनाहयेत्[16] ।
आवाहांश्च विवाहांश्च सौहृद्यं[17] चात्र कारयेत् ॥
निर्वासनम[18]मित्राणां[19] स्वयं न[20] प्रवसेद् गृहात्[21] ।
प्रवर्षणं च देवस्य [22]वातवृष्टिरभीक्ष्णशः ।
मेधावी रोगबहुलश्चलचित्तश्च[23] जायते ॥ स्वातौ ॥

लाङ्गलानि विशाखासु कर्षणं च प्रयोजयेत्[24] ।
यवगोधूमकर्मान्तान् शमीधान्यं[25] च वर्जयेत्[26] ॥
शालयस्तिलमाषाश्च ये च[27] वृक्षाः सुशाखिनः[28] ।

---

1 Mss & Tib -कर्म । Ch[1] "The rain will not spread everywhere". 2 Tib प्राज्ञः । Ch[1] बहुश्रुतः । 3-4 Tib स्वल्पकामः । Ch[1] "Expert in foretelling". 5 Ch[1] मृगया- । Tib अस्थिरशीलः । 6, 7, 8 Tib चञ्चलमतिः, महापुण्यवान् । Ch[1] लघुचित्तः ( light-minded ). 9 Ch[1] omits. 10, 11 Tib omits. 12 Ch[1] "One should domesticate ( or train ) elephants and horses". 13 Mss -गमनजं । 14 Tib reads : गणानां भोजनं दद्याद् । दद्यान्मोदकखण्डकं ॥ 15 Tib omits it. 16 Tib *glu. rnams. bya. ba. la. myur. shiṅ. 'grub. po.* गीतं च क्षिप्रं करणीयं । Ch[1] "One should make musical instruments". 17 Mss द्यांचा- । Ch[1] omits it. 18 Tib निवासं । 19 Tib मित्रं । Mss निर्वासनमनिद्रायां । 20 Tib शयनं । 21 B प्रसवेद् । Tib गृहप्रवेशं or प्रविशेद् गृहं । Ch[1] "One should not go out ( of his house but ) chase and drive ( प्रवासयेत् ) his enemies ( अमित्र ) away". 22 Mss चात्र । 23 Tib विचक्षणः । Ch[1] अचलः ( -बहुलोऽचलः ). It adds शूर । 24 Tib विशाखासु कृषिकर्मान्तान् कारयेत् । 25 Tib *lgaṅ. bu. can. rnams* ( those which have husk ). 26 Ch[1] reads simply माषं वर्जयेत् । 27-28 Tib "Trees and greens ( or green vegitable )". 28 Ch[1] शालयस्तिलाः फलवृक्षाश्च ।

रोपयेत्तान् विशाखासु गृहकर्म[1] च कारयेत्।
शिरःस्नानानि कुर्वीत मेध्यं प्रायश्च[2] कारयेत्॥
प्रवर्षणं च देवस्य विद्यात्कल्पपरिस्रवं[3]।
मनस्वी[4] दर्शनीयश्च[5] मेधावी[6] चात्र जायते।
क्रोधनोऽल्पसुत[7] श्चैव दुर्भगो[8] भक्तलोलुपः[9] ॥ विशाखासु ॥

अनुराधासु कुर्वीत मित्रैः[10] सद्भिश्च[11] सङ्गतिं[12]।
सर्वाणि मृदुकर्माणि माधुर्यं[13] चात्र कारयेत्[14]॥
क्षौरं च[15] कारयेदत्र शस्त्रकर्माणि कारयेत्।
संयुक्तान्त[16]प्रयोगांश्च सन्धि[17] कुर्याच्च नित्यशः[18]।
नष्टं पर्युपतप्तं[19] वा स्वल्पायसेन[यासं वि-][20] निर्दिशेत्॥
सुहृन्मित्रकृत[21]श्चात्र धर्मशीलश्च जायते।
प्रवर्षणं च देवस्य सुवृष्टि[22]मभिनिर्दिशेत्॥ अनुराधायां॥

ज्येष्ठायां पूर्वकारी स्याद्राजानं[23]चाभिषिञ्चयेत्[24]।
नगरं निगमं ग्रामं [25]मापयेदारभेत[26] च।
क्षत्रियाणां[27] च राज्ञां च सर्वकर्माणि कारयेत्॥

---

1 Mss ग्राह्- । Ch[1] "Build houses". 2 Tib गन्धकुटीं च । Ch[1] omits the 4th *pāda*. P omits this line. 3 Ch[1] "If it rains on that day, afterwards there will be drought ( अल्पपरिस्रवं ? )". । 4 Ch[1] omits. 4-5 Tib *yid. bde. par. blta. shin.* 5 Ch[1] दर्शनीय (?) 6 Ch[1] बहुश्रुतः । 7 Mss -नश्चसु- । Tib असुत ( अपुत्र ) । 8 Ch[1] omits. 9 Tib omits. Ch[1] adds सत्सङ्गकामः which is found under the next constellation. 10-11 Tib omits. 12 Tib सन्धिं ( *sdums* ). 13-14 Tib "should be done diligently by wise people". 15 Mss क्षुरं न । 16 Mss अत्युक्तान्त । Tib *bsdu. ba'i. sbyor. ba. rnams.* 17 Tib omits. 10-18 Ch[1] "One should not lend money ( or invest money )". 19 Ch[1] omits. 20 Mss स्वल्पाशनं । Tib क्लेशेनैव । 21 Tib -मित्रवान् । Ch[1] "He will be kind to his relations". 22 Ch[1] "There will be flood". 23 Tib ज्येष्ठायां पूर्वं ( आदौ ) राजानं... । Ch[1] simply राजानमभि- । 24 Mss put the following line here : नष्टं पर्युपतप्तं वा क्लेशेनैवेति निर्दिशेत which is placed below. Tib too puts this line here. 25 Tib *bśal. bya. ba* for *gshal. bya. ba*. Mss put ग्राम before निगम । 26 Tib indistinct. Ch[1] simply नगरं स्थापयेत् । 27 Tib & Ch[1] omit.

भ्रातॄणां भवति ज्येष्ठो ज्येष्ठायां योऽभिजायते ।
आयुष्मांश्च यशस्वी[1] च विद्वत्सु च कुतूहली[2] ॥
प्रासादमारोहेच्चात्र गजमश्वं रथं[3] तथा[4] ।
ग्रामनिगमराष्ट्रेषु[5] स्थापयेच्छ्रेष्ठिनां बलं[6] ॥
नष्टं पर्युपतप्तं वा क्लेशेनैवेति निर्दिशेत्[7] ।
दारुणान्यत्र सिध्यन्ति तानि विद्वान् विवर्जयेत् ।
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्[8] ॥ ज्येष्ठायां ॥

मूले तु मूलजातानि[9] मूल[10]कन्दालुकान्यपि ।
मूलाद्यानि[11] च सर्वाणि [12]बीजान्यत्र प्रयोजयेत्[13] ॥
ऋणं वै यत्पुराणं स्यादर्थो वास्याग्रतः स्थितः ।
मूले सिद्ध्यर्थमारभ्यं[14] तथा सर्वं[15] वराङ्गकं[16] ॥
चिकित्सितानि यानीह स्त्रीणां दारककन्ययोः ।
नदीषु[17] स्नापनं[18] चैव मूले सर्वान् प्रयोजयेत्[19] ॥

---

1 Ch[1] बहुश्रुतः ( बहुविद् ) । 2 Ch[1] सर्वशास्त्रेषु सुप्रबुद्धः ( =शास्त्रज्ञः ) । Tib : *no. mtshar. du. mkhas. par. 'gyur. ro.* "extremely learned or wonderfully wise". 3 Tib omits. 4 Ch[1] "Horses and elephants are to be domesticated". 5 Ch[1] omits. 6 Tib ग्रामनिगमराष्ट्राणामधिकारः प्रशस्तः । Ch[1] "A regional ruler or governor is to be placed for protection". Ch[1] adds : "The wounded will die". 7 This line is placed above in the Mss ( See p. 90 fn. 24 ) and here the following line is found : अत्र नष्टोऽथ वा वित्तो नैतदस्तीति निर्दिशेत् । Tib too adds this line here. Ch[1] omits this addition. It reads : "It is difficult to get back lost things". 8 Ch[1] "It is auspicious, if it rains. 9 Tib simply मूलं । 10 Tib omits कन्दा... । 11 Tib मूलार्थी । 12 Tib adds मूल । 13 Tib adds : *rtsa. ba. ma. yin. pa. rnams. la. ni. ma. yin. no* =अमूलानि न स्युः । 9-13 Ch[1] reads : "Cultivate fruits and vegitables". 14 Mss सिद्धा...ब्धं (P indistinct). Tib : मूले प्रार्थकः सिध्यति । 15 Mss & Tib -र्वा । 16 Mss & Tib -ङ्गनाः । Ch[1] reads these two lines as : ="Debt is to be collected (?)" and after this—"Sacrifices should be offered". 17 Tib *khyo. ga. rnams* पतीनां or नराणां । 18 P स्वपनं, B स्वपरं ( indistinct ). 19 Ch[1] reads these two lines as : "Curing diseases and decorating the body with ornaments ( are auspicious ). The rest is inauspicious".

दारुणान्यत्र सिध्यन्ति मङ्गलानि च कारयेत्[1] ।
किण्व[2] योगान् सुरायोगांश्च [3]कुर्याच्छत्रुभिः सह[4] ॥
धनवान् बहुपुत्रश्च[5] मूलवानत्र[6] जायते ।
अथात्र नष्टं[7] दग्धं[8] वा नैतदस्तीति निर्दिशेत्[9] ।
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत् ॥ मूले ॥

आषाढायां च पूर्वस्यां सरितश्च सरांसि च ।
वापीकूपप्रपाश्चैव तडागानि च कारयेत् ॥
उत्पाद्यानि[10] च पुष्पाणि तथा मूलफलानि च[11] ।
आरामांश्च प्रकुर्वीत भैक्षकांश्च प्रयोजयेत् ।
यानि चोग्राणि कर्माणि सिध्यन्त्यत्र तु तानि च[12] ॥
नष्टं पर्युपतप्तं[13] वा नैतदस्तीति निर्दिशेत् ।
आयुष्मान् पुण्यशीलश्च[14] दर्शनीयोऽत्र जायते ॥ पूर्वाषाढे ॥

उत्तरस्यामाषाढायां वैराणि न समाचरेत् ।
वापये[15]त्सर्ववासांसि[16] नवं नाच्छादयेदिति ॥

---

1 Ch[1] omits this line. 2 Tib *phye. btag* (s). *pa* ="parched barley ground into flour". 3-4 Tib -योगे नित्यं शुभं। Ch[1] "Wine ought to be made on this day". 5 B -याग-, P -पाप- । 6 Tib फल- । Ch[1] आयुष्मान् । 7 Tib omits. 8 Ch[1] omits. Tib विद्धं । 9 Ch[1] "It is difficult to get back". 10 Mss औदकानि । 11 Ch[1] "Cultivate flowers and fruits". Tib omits मूल । It reads : "Produce them by sprinkling water". 12 Tib adds : तानि विद्वान् विवर्जयेत् । Ch[1] reads ( besides the above-mentioned ones ) "The rest is inauspicious ( अवशिष्टानि रौद्राणि )" । 13 Mss नष्टं नष्टोप- । Tib : दग्धं ज्वराक्रान्तं वा ( *rims. kyi. btab. pa* ). Ch[1] "Lost things are hardly got back". 14 Ch[2] "obedient and compassionate". 15 Tib wrongly reads वापयेत् ( *drub. pa* ). 15-16 Ch[1] omits. Tib omits नवं ।

न संहरेद्वर्द्धयेद्वा[1] वास्तुकर्म[2] न सिध्यति[3] ।
शालाकर्म गवादीनां[4] ग्रामे ग्रामणिनस्तथा ।
श्रेणीबन्धं च राजा नु[5] समयं चात्र कारयेत्[6] ॥
प्रगल्भश्च[7] सभाशीलः[8] कृती[9] चात्र प्रजायते ।
सुहृदामभियोगी च[10] मन्त्रभाष्ये[11] विचक्षणः ॥
नष्टं[12] वाप्युपतप्तं[13] वा अस्तीत्येवं विनिर्दिशेत् ।
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत् ॥ उत्तराषाढायां ॥

अभिजिति न कुर्वीत ब्रह्मदेवस्य ह्यर्चनं[14] ॥ अभिजिति ॥

श्रवणे न[15] च कुर्वीत सर्वाः संग्रामिकाः क्रियाः ।
गीतशिक्षाध्ययनं च न चिरेण हि सिध्यति[16] ॥
कर्णयोर्वेधनं कुर्याद्राजानं चाभिषिञ्चयेत् ।
द्विजातीनां तु कर्माणि सर्वाण्येव प्रयोजयेत् ॥

---

1 Tib indistinct. It seems to be *skyog* ( *skyogs. pa* =to turn ). 2 Mss गृहवासश्च । 2-3 Tib : *khyim. mi. dbub. te. byas. na 'grub. par. mi. 'gyur. ro* =वास्तुकर्म न कारयेत् । गृहं न कारयेत् । कृते न सिध्यति । Ch[1] reads the whole line as *shou lien chi ssu*. 4 Mss शाल्यकर्माणि कुर्वीत । 5 Mss -जानः । 6 Tib omits समयं । It reads *rgyal. po'i. dgos. pa. rnams. de. la. bya. bar. bzan no.* राज्ञः प्रयोजनानि चात्र कारयेत । 4-6 Tib *lit.* पशूनां शालाश्च तथा ग्रामण्यश्च स्थापयेत् । श्रेणीः ( श्रेष्ठिनः ) स्थापयेत् । राज्ञः प्रयोजनानि तत्र कारयेत् । 3-6 Ch[1] omits. 7-8 Tib *'khor. man. po'i pan. tshul. can.* 9 Mss कृताश्चा- । Tib *byas. pa. bzo. bar* ( *'gyur. pa.* ). 10 Tib *grogs. po. dan. gcugs. sin* ="cultivated friendship". 11 Mss मन्दभाष्यो । Tib मन्दपुण्यः or अल्पपुण्यः (मन्दभाग्यः ?)। 7-11 Ch[1] reads: "obedient and respectful to parents, taciturn well-versed or well-trained in all the canons". 12-13 Tib *tsha. bas. btab. pa. mi. sos. sin* उपतप्तं... ? 13 Ch[1] & P omit. 14 Mss ब्रह्मदेवो भवेत्कश्चिन्नेच्छेदभिजित्कर्मणि ( P त्कमणो ) । Tib reading is adopted here. Ch[1] "Under अभिजित् it is just as under उत्तराषाढा" । 15 Ch[1] omits न । 16 Mss उपस्कुर्याच्च ( P तथा ) शयनं न चिरेण प्रयोजयेत् । Ch[1] "One should recite the *śāstras* or classics, appoint ministers, offer sacrifices". The Tib reading is adopted here.

बलिकृत्यानि[1] कुर्वीत दर्शयेच्च बलान्यपि[2] ।
मेधावी[3] अरोगी बलवान्[4] यज्ञशीलोऽत्र[5] जायते ॥
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्[6] ।
नष्टं च लभ्यते[7] तत्र श्रवणस्थे निशाकरे ॥ श्रवणे ॥

धनिष्ठा लघु नक्षत्रं सर्वकर्मसु पूजितं ।
अधोत्य ब्राह्मणः[8] स्नायाद्राजानमभिषिञ्चयेत् ॥
सर्वेषां च द्विजातीनां सर्वकर्माणि कारयेत् ।
श्रेष्ठिनं स्थापयेद् देशे[9] गणाध्यक्षं गणेष्वपि[10] ॥
मेधावी च यशस्वी[11] च महाभोगी[12] महाधनः ।
बह्वपत्यो[13] मृदु[14]र्दान्तो[15] महात्मा[16]चात्र जायते ॥
नष्टं दग्धं[17] प्रविद्धं[18] वा क्लेशेनैवात्र[19] लभ्यते ।
प्रवर्षणं च देवस्य विद्याच्चात्र सुवृष्टितां[20] ॥ धनिष्ठायां ॥

नित्यं शतभिषायोगे भैषज्यानि प्रयोजयेत् ।
कीर्तिकर्म[21] च कुर्वीत सिध्यन्त्याथर्वणानि च[22] ॥
प्रसारयेच्च पण्यानि[23] शौण्डिकं च प्रयोजयेत्[24] ।
उदधिं खानयेत्तत्र[25] तिलमाषांश्च वापयेत् ॥

---

1 Mss -ली- । 2 Tib indistinct. 3 Tib omits. 4-5 Ch[1] बहुश्रुत and obedient to the elders ( गुरुशुश्रूषुः ? ) 6 Ch[1] "It is auspicious if it rains. 7 Mss -भते । 8 Mss -णैः । 9 Tib omits. 10 Tib omits. 8-10 Ch[1] omits these three lines. 11 Ch[1] बहुश्रुत or वहुविद्य । 12 Mss -गो । Ch[1] omits. 13 Mss बह्व -भ्यो । Ch[1] omits. 14 Translations omit. 15 Ch[1] दान्त or शान्त । 16 Ch[1] omits. Tib आत्मवान् । 17-18 Ch[1] omits. 18 Tib *bsdams. pa* =प्रबद्धं (?) । 19 Mss अयत्नेना- [ यत्नेनैवा- ] । 20 Tib चतुर्दिनं । Ch[1] "If it rains on this day, afterwards there will be scarcity of water". .21 Ch[1] यज्ञं । 22 Ch[1] omits this *pāda*. 23 Tib reads : *ẓoṅ. btsoṅ. ba* ="Trade". 24 Tib *chaṅ. btsoṅ. ba* ="Trade of wine". 23-24 Ch[1] "Invest money and spread business". 25 Ch[1] omits this *pāda*".

सामुद्रिकाणि पण्यानि नाविनश्च[1] प्रयोजयेत्[2] ।
आदेयं च तदाऽदद्याद् व्ययं चात्र न कारयेत्[3] ॥
सन्धिपालान्[4] द्वारपालाँल्लेखकांश्च प्रयोजयेत् ।
भिषक्कर्म च कुर्वीत भैषज्यानि च संहरेत्[5] ॥
निधिं वा खानयेत्तत्र निदध्यादपि वा निधिं[6] ।
धनं चात्र[7] प्रयुञ्जीत[8] भिषक्कर्म च शिक्षयेत्[9] ॥
अथात्र मृगयेन्नष्टं[10] लभ्यते[11] तच्चिरादपि[12] ।
अरोगी[13] क्रोधनश्चात्र स्वप्नशीलश्च[14] जायते ।
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्[15] ॥ शतभिषायां ॥

पूर्वभाद्रपदायोगे क्रूराणां सिद्धिरुच्यते ।
नष्टविद्धोपतप्तं[16] वा नैतदस्तीति निर्दिशेत् ॥
दीर्घश्रोत्रो महाभोगो ज्ञातीनां च सदाप्रियः ।
महाधनोऽक्रूरकर्मा[17] निःक्रोध[18]श्चात्र जायते ।
प्रवर्षणं च देवस्य चण्डां वृष्टिं समादिशेत्[19] ॥ पूर्वभाद्रपदे ॥

1 Mss नांश्च (च)। 1-2 Tib "should depart". Ch[1] omits this line. 3 Tib *de. la. rgyal. po'i. bka'a. gsal.* ( indistinct ) *ba. dan. sdig. pa'i. las. mi. bya'o.* =राजाज्ञां प्रकटं कुर्याद् पापकर्म न कारयेत्। Ch[1] "should not send envoys ( or messengers )". 4 Tib दूतान् प्रेषयेत्। 5 Tib पिबेच्च भेषजं तत्र भैषज्यानि च प्रेषयेत्। Ch[1] "Medicine ( medicinal plants ) should not be planted". 6 Tib reads : निधिं वा आनयेत् ( *lit.* आज्ञापयेत् ) तत्र न दद्याद् ( or प्रेरयेत ) अपि वा निधिं। 7 Tib नवं। 8 Tib स्थापयेत्। 9 Tib भैषज्यानि सेवयेत्। 6-9 Ch[1] omits these two lines. 10 Mss नष्टं मृगयेद् । 11 Mss -द्रभस्यत्यचिरा-। 12 Ch[1] "easy to get back". 13, 14 Ch[1] omits. 15 Ch[1] omits this line. 16 Tib *smas* (?) *pa. dan. rims. kyis. btab. pa..* "Attacked by fever one will not be cured ( *mi. 'tsho. bar* )". Ch[1] "Lost things are hardly found." 17 Mss नः क्रूर-। Tib *las. mthun. par. byed. cin* ="To be in sympathy with". Ch[1] "peaceful". 18 Tib मन्दोत्साहः or निरुत्साहः। Ch[1] "quick-tempered, rash". 19 Ch[1] "If it rains, it is auspicious".

उत्तरस्यां तु कुर्वीत[1] आयुष्यं पुष्टिकर्म च[2] ।
न च दक्षिणतो गच्छेत्पुरं[3] चात्र प्रदापयेत्[4] ॥
आयुष्मांश्च यशस्वी च [5]धनवांश्चात्र जायते ।
अत्रापि त्रिगुणं विन्देदादानं यदि वा व्ययं[6] ।
प्रवर्षणं च दैवस्य सुवृष्टिमभिनिर्दिशेत्[7] ॥ उत्तरभाद्रपदे ॥

रैवत्यां रत्न[8] रजतं धन[9] धान्यं प्रयोजयेत् ।
कोष्ठागाराणि कुर्वीत किण्वं चात्र न कारयेत्[10] ॥
सुराकर्म च कुर्वीत हिरण्यं[11] गोव्रजानि च[12] ।
गोसङ्घं स्थापयेच्चात्र गोशालां चात्र कारयेत्[13] ।
आच्छादयेन्नवं वस्त्रं हिरण्यमपि धारयेत्[14] ॥
भिक्षुको दानशीलश्च दरिद्रश्चानसूयकः[15] ।
ज्ञातीनां सेवको नित्यं धर्मज्ञ[16]श्चात्र जायते ।
सुवृष्टिं नष्टलाभं च रैवत्यामभिनिर्दिशेत्[17] ॥ रैवत्यां ॥

1-2 Ch[1] omits. 3-4 Ch[1] omits. Tib reads : *mi. brtsa(m).mo.* 4 Mss add here : अभिषिञ्चेच्च राजानं प्रक्लिन्नानि (च) वापयेत्। क्रीणीयात्सर्वरत्नानि प्रेष्यं चाभरणानि च। स्थावरं कारयेत् कर्म प्रयुक्तं च न मापयेत् ॥ Tib & Ch[1] omit these lines. Ch[1] remarks : "This (constellation) is inauspicious for other things". 5 Translations omit. 6 Tib *sum. 'gyur. bgyis. lto[s]. che. shiṅ. 'jigs. pa. med. par. 'gyur. ro.* Ch[1] omits this line. Mss add after this : सुभगो जायते विद्वान्नतिदाता भवत्ययं। Translations omit this. 7 Ch[1] "If it rains on this day, there will be much loss". 8 Translations स्वर्ण। 9 Tib रत्नं। B धनं। 10 Tib कुलकृत्यं च कारयेत्। Ch[1] omits this (*pāda*). 11-12 Tib त्यक्तं कर्म न कारयेत्। Ch[1] omits. 13 Tib "Beginning of new roads, changing the course of a river (by building dams) and entering a house are considered good". Ch[1] reads : "should not make bridges and roads". 14 Ch[1] reads "should put on new and clean cloth, should make insense and medicine". 15 Ch[1] "He becomes monk, compassionate to the creatures, gives charity to the poor". Tib omits अनसूयकः। 16 Ch[1] omits it. 17 Ch[1] adds : अश्वशालां च कारयेत्।

स्त्रीपुंसमश्विना युञ्ज्याद[1] श्वशालां च कारयेत्[2] ।
अश्वान्प्रयोजयेदत्र रथं चात्र प्रयोजयेत्[3] ॥
ऋणः प्रयोगः कर्तव्यो बीजान्यत्र प्रवापयेत् ।
यानानि[4] च हयान् दम्यान् दन्तिनश्च[5] प्रयोजयेत्[6] ॥
भैषज्यं भोजयेदत्र भिषक्कर्म च कारयेत्[7] ।
मेधावी दर्शनीयश्च राजयोग्यश्च[8] सम्पदा[9] ॥
अरोगी बलवाँच्छूरः[10] सुभगो[11] ह्यत्र जायते ।
सुवृष्टिं नष्टलाभं च अश्विन्यामभिनिर्दिशेत् ॥ अश्विन्यां ॥

त्रितारां[12] भरणीं विद्यात्क्रूरकर्माणि साधयेत् ।
भृत्यांश्च भृतकांश्चापि[13] वृणुयाद्दर्शयेत्तथा[14] ॥
भृतिं[15] चोपनयेदत्र[16] भार्यां च न[17] विवाहयेत् ।
उत्कटको[18]वञ्चनकः[19] कूटसाक्षी[20] च तन्द्रिजः[21] ॥

---

1 Ch[1] omits स्त्रीपुंसम्... । 2 Ch[1] adds : अग्निशालां ( hothouse ). Tib : अश्विन्यां स्त्रीपुंसमश्वं युञ्ज्यादग्निशालां च का- । 3 Ch[1] "Tame the horses". Tib *rta. bsgrub. pa.* (?) and then रथं कारयेत् । 4 Tib omits. 5 Mss दान्तांश्चा- ( P श्चा ) त्र । 4-6 Tib "Horses and elephants should be tamed, one should ( sing ) dance and play". Ch[1] omits this line. 7 Tib भैषजप्रयोगः भैषजप्रदानं च शुभं । 8 Mss राज्यभोग्यश्च । 8-9 Tib राजदत्तसम्पत्सम्पन्नः । Ch[1] "Ultimately he receives honour and favour from the king". 10-11 Ch[1] omits these two. 12 Ch[1] omits. 13 P श्चात्र । 14 Translations omit दर्शयेत् । 15 Mss भूतिं । 15-16 Tib भृतिं च मृगयेत । Ch[1] omits. 17 Tib omits न । 18 Mss उत्कुटुको, उत्कोटुको । 18-19 Tib *thab. krol. dan. khrug. pa. byed. pa.* 20-21 Tib *gya. gyu. can. brdzun. che. ba.* 21 P -तः ।

विधिज्ञः[1] पापचारित्रः कदर्य[2] श्चात्र जायते[3] ।
जायते चात्र दुःशीलो गुरूणामभ्यसूयकः[4] ।
परोपतापो लुब्धश्च परव्याहारगोचरः[5] ॥ भरण्यां ॥

सप्तविंशतिनक्षत्रे कृत्तिकादि यदा भवेत् ।
भरण्यन्तानि ऋक्षाणीमां[6] प्रतिपादयेत्क्रियां[7] ॥
तेषां मध्ये यदा सर्वे शस्यान्योषधयोऽपि च ।
वनस्पतयश्च[8] पीड्यन्ते यत्रासौ तिष्ठते ग्रहः ।
सर्वं प्रतिपादयितव्यमुक्तनक्षत्रकर्मसु[9] ॥
उक्तो नक्षत्रकर्मनिर्देशो[10] नामाध्यायः ॥

चत्वारि भोः पुष्करसारिन्नक्षत्राणि ध्रुवाणि[11] भवन्ति तानि व्याख्यास्यामि । तच्छृणु । तद्यथा । त्रीणि उत्तराणि[12] रोहिणी च । क्षेमेऽध्यावसेत्[13] ।

---

1 Tib *blo. rno. ba*= तीक्ष्णबुद्धिः । 2 Tib *gtsaṅs. sme.* (*rme.*) *chuṅ. ba* अशुचि *i. e.* कदर्य । Ch[1] reads this and the preceding line as : "Robber ( one who takes money by force), dishonest and deceitful, पापचारित्र, greedy and flatterer". 3 After this Tib adds : तत्र आहतो ( *snad. pa* ) रोगाक्रान्तो वा दुःखेनास्तीति ( निर्दिशेत् ) । गमनं परिवर्जयितव्यं । तत्र च नियतं वर्षेत् महर्षेर्वचनं यथा । तस्य नक्षत्रस्य देवताय यमाय शान्तये बलिं दद्यात् । Ch[1] too adds : "It is difficult to get back lost things. If one is ill ( on that day ), it is difficult to cure one. One should not go out, should offer sacrifices to gods". 4 Tib हिंसकः or उपतापो । 5 Tib : "He behaves in a hostile way with others". 4-5 Ch[1] omits. Ch[2] omits the whole chapter. 6 Mss -णि इदं । 7 Mss -या । 8 Tib omits वनस्पति and reads : *phun. sum. tshogs.* 9 Tib reads :

कृत्तिकादिभरणीपर्यन्तसप्त[विंशति]नक्षत्रे प्रतिपादनीया एताः क्रिया अत्र समाहृताः । तेषां ( नक्षत्राणां ) मध्ये येषु सर्वेषां शस्यानामोषधीनाम्[वनस्पतीनाम्]उत्पीडको ग्रहस्तिष्ठति तस्मात् तानि रक्षितव्यानि ।

10 Tib omits कर्मनिर्देशो । 11 Tib शुभङ्कराणि or सुखकराणि । 12 Tib *smad.* ( *gsum* ) अधराणि ? 13 Tib तद् ( तानि ) ब्राह्मण अध्या- ।

बीजानि चात्र रोपयेद्[1] । निवेशनं चात्र कल्पयेत् । राजानं चाभिषिञ्चयेत् । यानि चान्यानि उक्तानि कर्माणि तानि कारयेत् ।

अथ नष्टं दग्धं वा विद्धं[2] चापि हृतं[3] च वा ।
एवमभिनिर्दिष्टं वा स्वस्ति [4]क्षिप्रं भविष्यति ॥
अथात्र जातो [5]धन्योऽसौ विद्यात्मा[6] च यशस्वी[7] च ।
मङ्गलीयो महाभोगी महायोगी[8] भविष्यति[9] ॥

चत्वारि भोः पुष्करसारिन्नक्षत्राणि क्षिप्राणि[10] भवन्ति । तद्यथा पुष्यो हस्ताभिजिदश्विनो चेति । एषु क्षिप्राणि कर्माणि कारयेच्च विचक्षणः[11] । स्वाध्यायं मन्त्रसमारम्भं[12] प्रवासप्रस्थानं[13] गाश्च[14] तुरङ्गानप्यत्र योजयेत्[15] । धूर्याणि[16] युक्तकर्माणि[17] चोषधीकर्माणि च । भैषज्यानि सर्वाण्यत्र प्रयोजयेत्[18] ।

तत्र यज्ञसमारम्भं चातुर्मास्यं च कारयेत् । अथात्र नष्टं दग्धं वा विद्धं[19] वा स्वस्ति भविष्यतीति वक्तव्यं ।

अथात्र जातकं विद्यान्मङ्गलीयं यशस्विनं[20] ।
महाभोगं च राजानं महायोगिन[21]मीश्वरं ॥
महाधनं[22] महाभोगं[23] तथा[24] च महदुत्तमं[25] ।
क्षत्रियं दानशीलं च[26] ब्राह्मणं[27] च पुरोहितं[28] ॥ इति ।

पञ्च खलु भोः पुष्करसारिन्नक्षत्राणि दारुणानि भवन्ति । तद्यथा ।

मघा त्रीणि च पूर्वाणि भरणी चेति पञ्चमी ।
अथात्र दग्धं नष्टं वा विद्धं[29] वा न भविष्यति ॥

इति वक्तव्यं । अर्धरात्रिकाणि षट्[30] । तद्यथा । आर्द्रा अश्लेषा स्वाती ज्येष्ठा[31]

---

1 Tib omits this line. 2 Tib reads बद्धं । 3 Tib omits हृतं । 4 Tib omits क्षिप्रं । 5, 6, 7, 8 Tib omits. 9 Tib ( इति ) विद्यात् । 10 Tib क्षेमङ्कराणि or सुखकराणि । 11 Tib omits विचक्षणः ( Tib reads *lit.* : कर्माणि क्षिप्रं कारयेत् ) । 12 Tib स्वाध्यायसमा- । 13 Mss प्रवासं प्र- । Tib *lam. du. 'gro. ba.* 14 Mss गावश्च । Tib omits. 14-15 Tib वडवायानं । 16 Tib omits it and reads : कर्माणि च क्षिप्रं कारयेत् । 17 P omits. Tib शस्त्रकर्माणि । 18 Tib omits this sentence. 19 Tib बद्धं । 20 Tib omits it. 21 Tib omits महायोगिन् । Mss महान्तं योगमीश्वरं । 22 Tib omits. 23 P omits it. 24-25 Mss omit. Tib *gon. ma* =उत्तमं । 26 Mss स्याद् । 27 P -णश्च । 28 P -त इति । 29 Tib बद्धं । 30 Tib omits. 1-31 Chinese translations omit.

शतभिषा भरणी[1] चेति । नवांशाः षड्ग्रासा[2] द्विक्षेत्राणि[3] । रोहिणी[4] पुनर्वसुर्विशाखा च । त्रीणि उत्तराणि चेति । उभयतो विभागानि । पञ्चदश क्षेत्राणि[5] । कृत्तिका[6] च मघा मूला त्रीणि पूर्वाणि । इमानि षट् पूर्वभागिकानि[7] । मृगशिरा पुष्या हस्ता चित्रा अनुराधा श्रवणा धनिष्ठा[8] रेवती अश्विनी चेति । इमानि नव नक्षत्राणि पश्चाद्भागीयानि त्रिंशन्मुहूर्तयोगानि क्षेत्राणि च[9] ।

अपि च ब्राह्मण शुभाश्च मुहूर्ता भवन्ति । अशुभाश्च मुहूर्ता भवन्ति[10] । शुभाशुभाश्च मुहूर्ता भवन्ति[11] । संप्रयुक्तनक्षत्रेषु सर्वेषु यदा शुभमुहूर्तसमापत्तयो भवन्ति तदा शोभना भवन्ति । यदाऽशुभमुहूर्तसमापत्तयो भवन्ति तदा न शोभना भवन्ति[12] । यदा तु पुनः शुभाश्चाशुभाश्च समापत्तयो भवन्ति तदा साधारणा[13] भवन्ति ।

अथात्र कथं रात्रिदिवसानां ह्रासो वृद्धिर्वा भवतीति तदुच्यते । वर्षाणां[14] प्रथमे मासे[15] पुष्य[16]नक्षत्रममावास्यां भवति । श्रवणा पूर्णमास्यां[17] । अष्टादश-मुहूर्तो[18] दिवसो भवति । द्वादशमुहूर्ता[19] रात्रिः । [20]षोडशाङ्गुलकाष्ठस्य मध्याह्नेऽर्धाङ्गुलायां छायायामादित्यः परिवर्तते । आषाढा[21] रात्रिं नयति । मृगशिरसि आदित्यो गतो भवति । वर्षाणां द्वितीये मासे मघाऽमावास्यां भवति[22] भाद्रपदा पूर्णमास्यां । सप्तदश[23]मुहूर्तो दिवसो भवति । त्रयोदश[24]मुहूर्ता रात्रिः ।

---

1 Tib omits भरणी । 2 B -सा दिक्सा । P शा दिवसा । Tib -खण्डा । 3 Mss -त्रकाणि । Tib adds भरणी before द्विक्षे- । 4 Tib omits it. 5 Mss क्षेत्रिका । 6 Tib omits. 7 Tib इमानि ध्रुवभागिकानि । 8 Tib omits. 9 Mss add here अभिजिन्मुहूर्तसमस्तयोगः ( P भागः ) पञ्चभागक्षे ( P छे ) त्रिका । Tib reads : अभिजितः मुहूर्तौ युगपत् क्षत्रियः [ क्षेत्रिकः ] । 10 Mss omit this sentence. 11 Tib omits this sentence. 12 Tib omits this sentence. 13 Tib असाधारणा । 1-13 Chinese translations omit. 14-15 Tib ज्येष्ठे ( मासे ) । 16 Tib मघा । 17 Tib पूर्वस्याममावास्यायां । 18 Tib सप्तदश- । 19 Tib त्रयोदश- । 20 Tib षड- । 21 Mss -ढ । Tib पूर्वाषाढा । 22 Tib adds वर्षाणां द्वितीये ( मासि ) । 23 Tib षोडश- । 24 Tib चतुर्दश- । 1-24 Ch[2] omits.

हेमन्तानां तृतीये[1] मासे पूर्वाषाढामावास्यां भवति। मघा पूर्णमास्यां। द्वादश[2] मुहूर्तो दिवसो भवति। अष्टादश[3] मुहूर्ता रात्रिः। द्वादशा[4]ङ्गुलायां छायायामादित्यः परिवर्तते*। पुष्यो रात्रिं नयति। ज्येष्ठायामादित्यो गतो भवति। हेमन्तानां चतुर्थे मासे श्रवणामावास्यां[5] भवति। फल्गुनी[6] पूर्णमास्यां। त्रयोदश[7] मुहूर्ता दिवसो भवति। सप्तदश[8] मुहूर्ता रात्रिः। दशाङ्गुलायां[9] छायायामादित्यः परिवर्तते। मघा रात्रिं नयति। आषाढा[10]यामादित्यो गतो भवति।

ग्रीष्माणां[11] प्रथमे मासे[12] उत्तरभाद्र[13]पदामावास्यायां भवति। चित्रा पूर्णमास्यां। चतुर्दश[14]मुहूर्तो दिवसो भवति। षोडश[15]मुहूर्ता रात्रिः।

---

Thus the whole chapter may be rendered into Sanskrit as :

वर्षस्य सप्तमे मासे पूर्वभाद्रपदाऽमावास्यां भवति उत्तरफल्गुनी पूर्णमास्यां। षोडशमुहूर्तो दिवसो भवति etc. अष्टाङ्गुलायां छायायामादित्यः परिवर्तते।

वर्षस्य अष्टमे मासेऽश्विनी अमावास्यां, स्वाती पूर्ण— त्रयोदशाङ्गुला- etc. पञ्चदश-मुहूर्तो etc.

वर्षस्य नवमे— कृत्तिकाऽमा— अनुराधा पूर्ण— पञ्चदशाङ्गुला— चतुर्दशमुहूर्तो—

वर्षस्य दशमे—मृगशिराऽमा— पूर्वाषाढा पूर्ण—। अष्टादशाङ्गुला— त्रयोदशमुहूर्तो—

वर्षस्यैकादशे— पुष्योऽमा— श्रवणा पूर्ण—। एकविंशत्यङ्गुला— द्वादशमुहूर्तो—

वर्षस्य द्वादशे— मघामा— शतभिषा पूर्ण— अष्टादशाङ्गुला— त्रयोदशमुहूर्तो—

वर्षस्य प्रथमे— उत्तरफल्गुनी अमा— रेवती पूर्ण— पञ्चदशाङ्गुला— चतुर्दशमुहूर्तो—

वर्षस्य द्वितीये— चित्रामा— भरणी पूर्ण— त्रयोदशाङ्गुला— पञ्चदशमुहूर्तो—

वर्षस्य तृतीये— विशाखामा— रोहिणी पूर्ण— दशाङ्गुला— षोडशमुहूर्तो—

वर्षस्य चतुर्थे— ज्येष्ठामा— आर्द्रा पूर्ण— सप्ताङ्गुला— सप्तदशमुहूर्तो—

वर्षस्य पञ्चमे— पूर्वाषाढामा— पुष्यः पूर्ण— चतुरङ्गुला— अष्टादशमुहूर्तो—

1 Tib wrongly reads : द्वितीये। 2 Tib त्रयोदश-। 3 Tib सप्तदश-। 4 Tib पञ्चा-। *.........* Narthang omits. 5 P -स्यायां। 6 Tib पूर्वाषाढा। 7 Tib चतुर्दश-। 8 Tib षोडश-। 9 Tib चतुर-। 10 Tib पूर्वाषाढा-। 11-12 Tib फाल्गुने (मासे)। 13 Tib पूर्व-। 14 Tib पञ्चदश-। 15 Tib पञ्चदश-। 1-15 Ch[2] omits.

अष्टा[1] ङ्गुलायां छायायामादित्यः परिवर्तते। फल्गुनी[2] रात्रिं नयति। श्रवणाया-मादित्यो गतो भवति। ग्रीष्माणां[3] द्वितीये मासे ऽश्विनी अमावास्यायां भवति। विशाखा पूर्णमास्यां। पञ्चदश[4] मुहूर्तो दिवसो भवति। पञ्चदश[5] मुहूर्ता रात्रिः। षड[6] ङ्गुलायां छायायामादित्यः परिवर्तते। चित्रा रात्रिं नयति। उत्तरायां[7] भाद्रपदायामादित्यो गतो भवति। [8]ग्रीष्माणां तृतीये मासे कृत्तिकामावास्यायां भवति। ज्येष्ठा[9] पूर्णमास्यां। षोडश[10]मुहूर्तो दिवसो भवति। चतुर्दश[11]-मुहूर्ता रात्रिः। चतुर[12]ङ्गुलायां छायायामादित्यः परिवर्तते। विशाखा[13] रात्रिं नयति। कृत्तिकायामादित्यो गतो भवति[14]। ग्रीष्माणां चतुर्थे मासे मृगशिरा[15] अमावास्यायां भवति। उत्तराषाढा[16] पूर्णमास्यां। सप्तदश-मुहूर्तो[17] दिवसो भवति। त्रयोदश[18]मुहूर्ता रात्रिः। मध्याह्ने द्वि-अ[19]ङ्गुलायां छायायामादित्यः परिवर्तते। ज्येष्ठा[20] रात्रिं नयति। पुष्य आदित्यो गतो भवति।

संवत्सरमन्वेषणतो[21] मुहूर्तविशेषणैः[22] सर्वाणि चैतानि[23] (नक्षत्राणि) भागानु[24]भागेनामावास्यायां पूर्णमास्यां च युज्यन्ते[25]। ऊनरात्रस्य[26] पूर्णरात्रस्य च ग्रहीतव्यं[27]। तत्र तृतीये वर्षेऽधिको मासो[28] युज्यते[29]। षण्णां मासाना-महोरात्राणि समानि भवन्ति। अतः षण्मासाद् दिवसो वर्धते। षण्मासाद्रात्रि-[30]

---

1 Tib त्रि-। 2 Tib पूर्वाषाढा। Mss फा-। 3 Tib *dpyid =lit.* वसन्तानां। 4 Tib षोडश-। 5 Tib चतुर्दश-। 6 Tib द्वि-। 7 Tib पूर्वभाद्र-। 8 Tib वसन्तानां। 9 Tib (Narthang) मूला। 10 Tib सप्तदश-। 11 Tib त्रयोदश-। 12 Tib द्वि-। 13 Tib ज्येष्ठा। 1-14 Ch[2] omits. 15 Tib पुष्यः। 16 Tib पूर्वाषाढा। 17 Tib अष्टादश-। 18 Tib द्वादश-। 19 Tib अर्धा-। 20 Tib पूर्वाषाढा। 1-20 For Ch[1] see the preceding page. 21 Mss -न्वेषणं। 22 Mss -षणं। Tib readings are adopted here. 23 Mss चैत्राणि। Tib adds नक्षत्राणि। 24 P omits भागानु। 25 P omits it. B -ते। 26 P omits it. 26-27 Tib रात्रिश्च अहोरात्रं च ज्ञातव्यं। 27 Mss -व्यः। 28 Mss -कमासिको। 29 Tib प्रतिपञ्चवर्षे एको मासोऽधिको भवति। 14-30 Ch[2] omits.

वर्धते[1] । षण्मासाद्दिवसो मासे मासे समेव हीयते । [2]षण्मासाद्रात्रिर्मासे मासे परिहीयते[3] ।

षण्मासादादित्यः परिवर्तते[4] । उत्तरां दिशं संचरति । षण्मासाद्दक्षिणां दिशं । षण्मासात्समुद्रे उदकपरिमाणस्य[5] ह्रासो वृद्धिश्च भवति[6] । सूर्यगत्या चन्द्रगत्या च समुद्रोदक[7] वेलाभिवृद्धिर्भवति । अत्र गणनाप्रतिजागरणास्मरमित्येवम्[8] एष संवत्सरो व्याख्यातो भवति ।

चन्द्र आदित्यः[9] शुक्रो[10] बृहस्पतिः शनैश्चरोऽङ्गारको [11]बुधश्च । इमे ग्रहाः । एषां ग्रहाणां बृहस्पतिः संवत्सरस्थायो[12] । एवं शनैश्चरो बुधोऽङ्गारकः शुक्रश्चेमे मण्डलचारिणः ।

भरणी कृत्तिका रोहिणी मृगशिरा एतत्साधारणं प्रथमं मण्डलं । आर्द्रा पुनर्वसुः पुष्योऽश्लेषा एतत्साधारणं द्वितीयं मण्डलं । मघा अथ फल्गुनद्वयं हस्ता चित्रा एतत्साधारणं तृतीयं मण्डलं । स्वाती विशाखा अनुराधा एतत्साधारणं चतुर्थं मण्डलं[13] । ज्येष्ठा मूलाषाढा[14]-

1 Mss षण्मासामासे मुहूर्तो व- । 2-3 Mss -सान्मुहूर्तो मासे- । Tib reads ( for these two sentences ) षण्मासं मासे मासे मुहूर्तानि समानि वेदितव्यानि । 3 Ch[1] reads the whole paragraph as : "Now I shall speak of the *mala-māsa* ( intercalary month ). In nineteen years there are seven *mala- māsa*. In five years two. From the fifth to the tenth month sun moves to the south, night lengthens by one moment and day shortens by one. From the eleventh to the fourth month, sun moves to the north, day lengthens by one moment and night shortens by one. The disc of the moon increases and decreases according to the distance of the sun". 4 Tib omits it. 5-6 Mss -माणो भवति । Tib : समुद्रे ह्रासवृ...... । 7 Tib omits समुद्रोदक । 8 Tib reads : गगनाव्यतिरेकेण ज्ञातुं न शक्यते । 9 Mss add here राहु । 10 Tib reads राहु in place of शुक्र । 11 Mss add here : केतुर्धूमकेतूरोहितकेतुः ( Ch[1] reads only seven ). 12 Tib प्रभुः । 12-14 Ch[1] omits. 1-14 Ch[2] omits.

द्वयमत्र[1] सर्वाणि महाभयानि भवन्ति। इदं पञ्चमं मण्डलं[2]। [3]अभिजिच्छ्रवणा[4] धनिष्ठा शतभिषा उभे भाद्रपदे [5]चैतत्साधारणं षष्ठं मण्डलं[6]। रेवती अश्विनी[7] चैतत्साधारणं सप्तमं[8] मण्डलं। संवत्सरमेतेषु[9] यद्य[10]न्नक्षत्र[11]मण्डलं पीडयति तस्य तस्य जनपदस्य सत्त्वस्य वा पीडा निर्देष्टव्या[12]।

द्वादश मुहूर्तानि दिवसे ध्रुवाणि[13] द्वादश रात्रौ। षण्मुहूर्ताः सञ्चारिणः[14]। कतमे षट्। [15]नैऋतो वरुणो वायवो[16] भर्गोदैवो रौद्रो विचारी च। इतीमे सञ्चारिणः षट्[17]।

अथात्र श्रावणे[18] मासे [19]पूर्णेऽष्टादशमुहूर्ते[20] दिवसे सूर्योदये च चतुरोजा[21] नाम मुहूर्तो भवति। रोहितस्य[22] च मुहूर्तस्य बलस्य चान्तरे मध्याह्नो भवति। सूर्यावतारे तु विचारी नाम मुहूर्तो भवति। द्वादशमुहूर्तायां रात्रावव‌तीर्णे सूर्ये षष्ठे मुहूर्ते[23] नयमनो नाम मुहूर्तो भवति[24]। आतपाग्निरेवं नाम मुहूर्तो रात्र्यवसाने भवति। भाद्रपदे मासे[25] पूर्णे[26] सप्तदश[27]मुहूर्ते दिवसे सूर्योदये च चतुरोजा[28] एवं नाम मुहूर्ता भवति[29]। मध्याह्ने[30]ऽभिजितो[31] नाम मुहूर्तो भवति[32]।

1-2 Tib -द्वयं श्रवणा एतन्महाभयङ्करं पञ्चमं महामण्डलं। 3-4 Tib omits. 5-6 Tib omits. 7 Narthang adds भरणी। 8 Tib षष्ठं। Tib reading is supported by बृहत्संहिता of Varāhamihira. 9 B adds ग्रहेषु। 10 Tib यदा नक्ष-। 11 Mss -त्रं। 12 Tib पीडा भवतीति दृश्यते। 13 B adds मुहूर्तानि ग्रहाणि। P adds ग्रहाणि। 13-14 Tib reading seems to be defective: *yud. tsam. bcu. gñis. pa'i. ñin. par. ni. gza'a. bcu. gñis. te. mtshan. mo. yud. tsam. drug. drug. rgyu. ste.* 15-17 Tib omits. 16 अवयवो (?)। 18 Tib ज्येष्ठे *dbyar. zla. (ra.) ba.* 19 B सम्पूर्णे। 20 Tib सप्तदश-। 21 Mss चतुसो। Tib: *bshi. mthon* (Nar. *'thon*). 22 Mss रोहण-। 23 Mss षण्मुहूर्ते। 22-24 Tib reads: सूर्योदये उद्गतो ? (*'gro. ba*) नाम मुहूर्तो भवति। त्रयोदशमुहूर्तायां रात्रौ षष्ठे मुहूर्ते संयोगो (संयमो ?) नाम मुहूर्तो भवति। B omits these three sentences here. It reads them after the following two sentences. 25 Tib वर्षाणां द्वितीये मासे। 26 Tib *lit.* पौर्णमास्यां। 27 Tib षोडश-। 28 Mss चतुरोज। 29 B omits नाम मुहूर्तो भवति and reads those omitted sentences here. 30 B omits मध्याह्ने। 31 Tib *mi. 'pham* अविजितः (?) for अभिजितः। 1-32 Ch omit.

सूर्यावतारे[1] रौद्रो नाम मुहूर्तो भवति। [2]त्रयोदशमुहूर्तायां रात्रावावतीर्णे[3] सूर्ये विचारी नाम मुहूर्तो भवति। अर्धरात्रे महाभयो[4] वायवो[5] नाम मुहूर्तो भवति[6]।

रात्र्यवसाने आतपाग्निरेवं नाम मुहूर्तो भवति। अश्वयुजे मासे पूर्णे[7] षोडशमुहूर्तो[8] दिवसो भवति। सूर्योदये चतुरोजा[9] नाम मुहूर्तो भवति। समुद्गतस्य च मुहूर्तस्य[10] अभिजितस्य[11] चान्तरे[12] मध्याह्नो[13] भवति। सूर्यावतारे[14] भर्गोदेवो[15] नाम मुहूर्तो भवति।

चतुर्दश[16]मुहूर्तायां रात्रावावतीर्णे[17] सूर्ये रौद्रो नाम मुहूर्तो भवति। अभिजितस्य[18] च मुहूर्तस्य भीषमाणस्य[19] च मुहूर्तस्य[20] अन्तरेणार्धरात्रं भवति। रात्र्यवसाने आतपाग्निरेवं नाम मुहूर्तो भवति।

कार्त्तिके मासे[21] पूर्णे[22] दिवसः[23] समरात्रिर्भवति। पञ्चदशमुहूर्तो दिवसो भवति पञ्चदशमुहूर्ता रात्रिः। समाने[24]ऽहोरात्रे[25] सूर्योदये चतुरोजा[26] एवं नाम मुहूर्तो भवति। संमुखो[27] नाम मुहूर्तो भवति[28] मध्याह्ने। सन्ततो नाम मुहूर्तः[29]

---

1 Tib सूर्योदये। 2 Tib चतुर्दश-। 3 Mss रात्र्यवनी-। 4 Tib महामाया। 5 Tib omits. 1-6 Chinese translations omit. Ch[1] reads ( After enumerating the seven planets ): "Bṛhaspati completes a cycle in 12 years, Śanaiścara in 28 years, Śukra in one and a half years, Aṅgāraka ( Maṅgala ) in two years and Budha in one year. The sun completes a cycle in a day while the moon in thirty days. These are the seven planets thus completing a cycle according to law...". 7 Tib पूर्णमास्यां। Mss omit. 8 Tib पञ्चदश-। 9 Mss -रोज। 10 Tib समुद्गते सूर्ये। 11 Tib अविजितस्य। 12 Mss & Tib अनन्तरं। 13 Tib मध्यमो नाम मुहूर्तो। 14 Tib सूर्योदये। 15 Tib देवावयवो। 16 Tib पञ्चदश-। 17 Mss रात्र्यवती-। 18 Tib अविजितस्य। 19 Tib *'gro. ba* गमनस्य? 20 Mss add अनन्तर। 21 Tib (repeats) अश्वयुजे। 22 Tib पूर्णमास्यां। 23 Mss दिवसे। Tib अहोरात्रं समं भवति। 24-25 Mss दिवसाश्च समा भवन्ति रात्रयश्च। Tib *lit.* समानमुहूर्तेऽहोरात्रे। 26 Mss चतुरोज एव। Narthang reads एवं नाम but omits the name चतुरोजा। Dege reads it. 27 Mss मासमुखो। 27-28 Tib omits. 6-29 Ch omit.

[1]सूर्यावतारे[2] । रात्राववतीर्णमात्रे सूर्ये[3] भर्गो देवो[4] नाम मुहूर्तो भवति। अर्धरात्रे ऽ[5] भिजिन्मुहूर्तो भवति । रात्र्यवसाने आतपाग्निरेवं नाम मुहूर्तो भवति।

मार्गशीर्षे[6] मासे च पूर्णे[7] चतुर्दशमुहूर्ते दिवसे सूर्योदये चतुरोजा एवं[8] नाम मुहूर्तो भवति । विरतस्य संमुखस्य[9] च मुहूर्तस्यान्तरे[10] मध्याह्नो भवति[11]। सूर्यावतारे वरुणो नाम मुहूर्तो भवति। षोडशमुहूर्तायां रात्राववतीर्णमात्रे सूर्ये संतापनः[12] संयमो[13] नाम मुहूर्तो भवति। राक्षसस्याभिजितस्य च मुहूर्तस्यान्तरे-[14] ऽर्धरात्रं भवति। रात्र्यवसाने आतपाग्निरेवं[15] नाम मुहूर्तो भवति।

पौषमासे[16] पूर्णे[17] त्रयोदशमुहूर्ते दिवसे सूर्योदये चतुरोजा एवं[18] नाम मुहूर्तो भवति। मध्याह्ने विरतो नाम मुहूर्तो भवति। सूर्यावतारे नैरृतो नाम मुहूर्तो भवति। सप्तदशमुहूर्तायां रात्राववतीर्णमात्रे सूर्ये वरुणो नाम मुहूर्तो भवति। अर्धरात्रे राक्षसो नाम मुहूर्तो भवति। रात्र्यवसाने आतपाग्निरेवं[19] नाम मुहूर्तो भवति।

माघमासे[20] पूर्णे[21] द्वादशमुहूर्ते दिवसे सूर्योदये चतुरोजा[22] नाम मुहूर्तो भवति । सावित्रस्य[23] च विरतस्य[24] च मुहूर्तस्यान्तरेण[25] मध्याह्नो[26] भवति । सूर्यावतारे विजयो[27] नाम मुहूर्तो भवति। अष्टादशमुहूर्तायां रात्राववतीर्णमात्रे सूर्ये नैरृतो नाम मुहूर्तो भवति। गर्दभस्य मुहूर्तस्य च राक्षसस्य चान्तर[28]मर्धरात्रं भवति। रात्र्यवसान आतपाग्निरेवं[29] नाम मुहूर्तो भवति[30]।

---

1 Tib *cha. mñam. par. dbus. na. gnas. pa. na. mñam. pa. shes. bya. ba'i. yud. cam. du. 'gyur. ro.* =समभागे [ दिवसे (?) ] मध्याह्ने संस्थितो (?) नाम मुहूर्तो भवति। 2-3 Tib सूर्यावतारे रात्राववतीर्णायां । 4 Tib देवावयवो। 5 Tib अविजितो। 6 Tib आश्विने (*ston. zla. 'brin. po*). 7 Tib *lit.* पूर्णमास्यां। 8 Mss -ज एव। 9 Mss मासमुख-। 10-11 Tib *rjes. la. dbus. su. 'gyur.* (*nas*). 12 P संतानो। 12-13 Tib संततो। 14 Mss अनन्तरे। 15 Mss एव। 16 Tib मार्गशीर्षे (*dgun. zla. ra. ba*). 17 Tib *lit.* पौर्णमास्यां। 18 Mss -ज एव। 19 Mss एव। 20 Tib पौषमासे (*dgun. zla. 'brin po*). 21 Tib *lit.* -पूर्णमास्यां। 22 Mss -रोज। 23 Tib *dg'a. byed.* 24 P omits. 25 Mss अनन्तरेण। Tib *rjes. la.* 26 Tib *dbus. su. 'gyur.* 27 Tib विरजो। 28 Tib *rjes. la.* Mss अनन्तरं। 29 Mss एव। 1-30 Chinese translations omit.

यथा [1]श्रावणे तथा माघे। यथा भाद्रपदे तथा फाल्गुने। यथाऽश्वयुजे तथा चैत्र। यथा कार्त्तिके तथा वैशाखे। यथा[2] मार्गशीर्षे तथा ज्यैष्ठे। यथा पौषे तथाऽषाढे[3]। एवमेतेषां नक्षत्राणां मुहूर्तानां[4] चरितं विचरितं च ज्ञातव्यं[5]। नक्षत्रविचरणं नाम प्रथमोऽध्यायः[6]।

यथामध्यं नक्षत्राणां[7] रात्रिवशेन[8] दिवसवशेन[8] चोत्कर्षापकर्षौ[9] कर्तव्यौ[10]। हीयमाने वर्धमाने[11] वा दिवसे[12] वा मासे[13] वा पूर्णे[14]ऽर्धमासे वा। द्वितीया षष्ठी नवमी द्वादशी चतुर्दशी[15] अत्रान्तरे दिवसे[16] कला वर्धते रात्रौ कला हीयते[17]।

चत्वारो महाराजानो ध्रियते यैर्वसुन्धरा।
अतिवृद्धि[18]र्विशुद्धश्च वर्धमानः पृथक्श्रवाः[19] ॥
महाभूतानि चत्वारि कम्पयन्ति वसुन्धरां[20]।
आप इन्द्रश्च वायुश्च तथाग्निर्भगवानपि ॥
त्रयस्तु ते[21] यत्र भवन्ति पक्षे षडेकमासे तु भवन्ति वेगाः।
परस्य चक्रस्य निदर्शनं[22] स्यात्प्रकम्पते यत्र मही त्वभीक्ष्णं[23] ॥

---

1-3 Tib : यथा ग्रीष्माणां प्रथमे (मासे) तथा वर्षाणां प्रथमे। यथा वसन्तस्य द्वितीये तथा वर्षाणां ( Nar. ग्रीष्माणां ) द्वितीये। यथा वसन्तस्य प्रथमे तथा शरदः प्रथमे। यथा हेमन्तस्य चतुर्थे तथा कार्त्तिके। यथा पौषे तथा हेमन्तस्य प्रथमे। यथा पौषे तथा ग्रीष्माणां द्वितीये। 2 P omits. 4 Tib omits. 5 Mss ज्ञात्वा। 6 Mss नक्षत्रयथाविचारणेषु प्रथमतो नामाध्यायः। Tib reading is adopted here. 1-6 Chinese translations omit. 7 Tib यथा नक्षत्राणां मध्ये। 8 Tib -योगेन। 9 P omits अपकर्ष। 10 P -व्यो। Tib भवतः। 11 P omits. 12 P omits वा दि-। 13-14 Tib पूर्णमास्यां। 15 Tib omits. 16-17 Tib *de. dag. mtshams. kyi. shag. 'das. nas. nub. mo.* [अत्रान्तरे] दिवसेऽतीते रात्रिः (?)। 18 Tib -मृत्यु-। 19 Tib पृथक्क्रमः। The names of the four महाराज are given elsewhere as धृतराष्ट्र, विरूढक, विरूपाक्ष and कुवेर ( वैश्रवण )। 20 Mss omit. 21 Mss -यस्त्रिंशा। 22 Tib आगमनं। 6-23 Ch[2] omits. For Ch[1] see the following page.

विशाखा[1] दशरात्री स्याज्ज्येष्ठा[2] द्वादशरात्रिका ।
पञ्चविंशतिराषाढा[3] श्रवणा[4] पञ्चसप्ततिः[5] ॥
रात्रिशतं भाद्रपदे[6] क्रतु[7] रश्वयुजे[8] स्मृतः ।
अध्यर्धं कार्त्तिके मासे क्रतुर्मार्गशिरे [9]स्मृतः ॥
पौषे[10] तु पञ्चपञ्चाशन्माघे[11] रात्रिशतं स्मृतं ।
अध्यर्धं[12] फाल्गुने[13] मासे चैत्रे[14] त्रिंशत्तु रात्रयः ।
विपाको भूमिवेगानामतः कम्पः प्रवर्तते ॥
यदा सर्वेषु मासेषु सततं कम्पते मही ।
वृक्षास्तथा चलन्ति स्म[15] ज्वलं वा यदि कम्पते ।
पर्वतः पर्णवत्कम्पेद् भयमत्र[16] विनिर्दिशेत्[17] ॥

---

1 Tib चैत्र ( *dpyid. zla. 'brin. po* ). चैत्रे चेद् भूमिकम्पः स्यात् ( तर्हि ) दशरात्रं ( -त्रपर्यन्तं ) भयं भवेत् । Tib reads this passage thus throughout. 2 Tib ग्रीष्माणां प्रथमे मासे । 3 Mss -षाढी । Tib ग्रीष्माणां द्वितीये मासे । 4 Tib ज्यैष्ठ ( *dbyar. zla. ra. ba* ). 5 B -विंशतिः । 6 P -पदा । Tib आषाढ ( *dbyar. zla. 'brin. po* ). 7 Mss indistinct, it may be ऋतु । Tib पञ्च । 8 Tib कार्त्तिके ( *ston. zla. tha. chuṅs* ). 9 Tib omits this line. 10 Tib हेमन्तस्य द्वितीये ( *dgun. gyi. zla. ba. gñis. pa* ) 11 Tib हेमन्तस्य तृतीये । 12 Tib पञ्चविंशतिः । 13 Tib हेमन्तस्य चतुर्थे । 14 Tib फाल्गुने ( *dpyid. zla. ra. ba* ). 15 Mss स्म ज- । 16 Mss पर्वण्यपर्वण्येवायुर्गात्रमिति । 17 P निर्दि- ।

According to Tib the reading is :

वृक्षस्तथाचलश्चापि जलं वा यदि कम्पते ।
पर्वतः पर्णवत्कम्पेत् कल्पस्येव भयं भवेत् ॥ इति निर्दिशेत् ।
or पर्वतः पर्णवत्कम्पेद् ( कल्पस्यैव ) भयमत्र विनिर्दिशेत् ॥

1-17 Ch[1] "I shall speak again of earthquake, listen carefully. If there is earthquake there will be war ( *lit.* armies rise ). The first element *viz.* the earth will shake and the rest three also will shake. If in the third month there is earthquake then within ten days there will be war. If in the fourth month, the result is the same as said above. If in the fifth, within twenty-five days there will be war. If in the sixth, within 75 days there will be war. If in the 7th, within hundred days ; if in the 8th, within sixty days. If in the 9th, within 90 days ; if in the 10th, within 55 days ; if in the eleventh, within hundred days ; if in the 12th, the same as before. If in the first month, within 90 days ; if in the second month, within thirty days there will be war." Ch[2] omits all these.

नगराण्यथ वा ग्रामा घोषा[1] ये चात्र संश्रिताः[2] ।
शीघ्रं भवन्ति विजनारण्यभूता[3] मृगाश्रयाः[4] ॥
अटव्यः संप्रवर्तन्ते दश वर्षाणि पञ्च च ।
अनावासा[5] दिशो विद्याद् भूमिचालविचालिताः[6] ॥

कृत्तिकासु चलेद् भूमिर्ग्रामेषु नगरेषु वा ।
अभीक्ष्णं मुच्यते[7] ह्यग्निर्दहते[8] सतृणालयान् ॥
कृष्णाग्निरशनेः[9] पातः,[10] कर्मारा आहिताश्रयाः[11] ।
आगाराश्च निवर्तन्ते संवर्तनेव[12] धातवः ॥
ये जाता ये[13] च संवृद्धा[14] ये च तं ग्राम[15]माश्रिताः ।
एते व्यसनमच्छन्ति भूमिचालविचालिताः[16] ॥
रोहिण्यां चलिता भूमिः सर्वबीजविनाशनं ।
प्रोप्तं शस्यं न रोहेत भवेत् फलस्य[17] कृच्छ्रता ॥

---

1-2 Narthang omits this. 3-4 Tib -स्थिता नराश्च ये । 4 B -श्र याः । Ch[1] "If there is earthquake throughout the year then the places where there is earthquake, towns and villages all become empty. The inhabitants either go to other countries or escape to open places. After fifteen years they return to their homes." 5 Tib *mi. bde. mi. 'byuṅ. ṅo* =अशुभाः भूतवर्जिताः । "Inauspicious, nothing grows there." 6 B adds भूमिकम्पनिर्देशो नामाध्यायः । P adds इति श्रीदिव्यावदाने भूमि...... । Tib omits this. Ch[1] "I shall speak again of earthquakes connected with the constellations." 7 Tib दहते । 8 Tib -मनुष्यान् । Ch[1] : "Great fire spreads and burns villages and towns." 9 Mss -निपातः । 10 Mss add च । Translations omit this *pāda*. Tib : *mes. skor.* ( Nar. *bskor.* ) *bnas. pa'i. gza'a* ( Nar. *bza'a* ). *daṅ*. Tib reads this line as कर्मारा मणिकाराश्च दारका...... ? 11 Ch[1] "Workers of gold and silver will be destroyed". 12 P संवर्तन । Translations omit this line. 13-14 Translations omit. 15 Tib मार्गमा- । Ch[1] omits this *pāda*. 16 Ch[1] "All die". 17 Tib omits. Mss कालस्य । Ch[1] "There will be scarcity of fruits." 1-17 Ch[2] omits.

गुर्विणीनां च नारीणां गर्भो निपीड्यते[1] भृशं।
दुर्भिक्षव्यसनाक्रान्ता[2] त्रिभागे तिष्ठति प्रजा[3] ॥
महात्मानश्च राजानः श्रीमन्तश्च नरोत्तमाः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः[4] ॥
मृगशीर्षे चलेद्भूमिरोषधीनां विनाशनं[5] ।
चिकित्सकाः श्रोत्रियाश्च घटकाः[6] सोमयाजकाः[7] ॥
सोमपीताश्च[8] ये विप्रा वानप्रस्थाश्च तापसाः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः[9] ॥
आर्द्रायां चलिता भूमिर्वृक्षा नश्यन्ति क्षीरिणः।
अन्नपानानि नश्यन्ति पथिका दंष्ट्रिपालिकाः[10] ॥
कूपखाः[11] परिखाखाश्च[12] पापका[13] ये च तस्कराः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥
पुनर्वसौ चलेद्भूमिर्मण्डलं कुण्डिकापि च[14] ।
वागुरिकाः कारण्डवाश्चक्रिणः शुकसारिकाः[15] ॥
अर्भका भ्रमकाराश्च[16] मांसिकाः[17] शङ्खवाणिजाः[18] ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः[19] ॥

1 Mss गर्भाणि पीडते। 2 Mss कृच्छ्रतरो भवेदेव। 2-3 Ch[1] "There will be famine, disease and war and many deaths." 4 Ch[1] "Kings also..............." 5 P विनाशकृत्। 6 Tib omits. 7 Mss -या(पा)चकाः। Tib omits सोम and reads only याजकाः। 8 Tib omits. 5-9 Ch[1] "Medicine and forests are destroyed, वानप्रस्थ and श्रोत्रिय or याजक die." 10 Tib राष्ट्रप्रस्थिका(ता)ः। Ch[1] "small king, राष्ट्रपालिकाः ?" 11 Mss -खानाः। 12 Mss -खा(षा)खाना। 13 Mss दीपका। 11-13 Ch[1] omits. 14 लि- कुन्तिका ? कुण्ठका ? अपि। Tib *dkyil. 'khor. byed. pa'i. shal. ta. ba.* =मण्डलं कर्तुर्दासः or मण्डलकारिणो ( मण्डलिनः ? ) दासः। 15 Mss वागुराकार रंता च श्वाक्रियाः शुक्लसारि(लि)काः। Tib *lam. gyi. nor. can. dan. lam. du. 'gro. ba. dan. 'khor. lo. pa. dan* ( चक्रियाः =चक्रिणः ) पथिधनवन्तो ( पथिधनप्राप्ताः ? ) मार्गिकाश्चक्रियाः। 16 B अर्वकीरा भ्रमकारा। P अर्वकः रात्रमाकारा। Tib अर्भकाः मन्थन-निपुणाः ( *srub. mkhan* ). 17 Mss मासिकाः। Tib *śen. pa* ( It should be *śan. pa* ). 14-18 Ch[1] "Those who dwell in the mountains and work there, all........." 1-19 Ch[2] omits.

पुष्येण च चलेद्भूमिर्ब्राह्मणा नायकास्तथा[1] ।
दूरङ्गमा वाणिजकाः सार्थवाहाश्च ये नराः ॥
पार्थिवाः पार्वतीयाश्च ये च तद्भक्तिगोचराः[2] ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ।
शिलावर्षं प्रवर्षन्ति शस्यानामनयो महान्[3] ॥
अश्लेषायां चलेद्भूमिर्नागाः सर्वे सरीसृपाः ।
कीटाः पिपीलिकाः श्वाना एकखुराश्च ये मृगाः[4] ॥
वैद्या[5] विषकरा[6] श्चापि ये च सत्त्वा दरोश्रयाः[7] ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥
मघासु चलिता भूमिर्महाराजोऽत्र तप्यते ।
ये च श्राद्धा[8] निवर्तन्ते समाजा उत्सवास्तथा[9] ।
यज्ञाश्च देवकृत्यं च सर्वमत्र निवर्तते ॥
ये जाता ये च संवृद्धा[10] ये चान्येप्यग्रपण्डिताः ।
गन्धर्वाश्च विनश्यन्ति नरा ये च महाकुलाः ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥
फल्गुन्यां चलिता भूमिर्ऋतु[11]र्व्यावर्तते तदा[12] ।
तिर्यग्वातश्चैव वाति कृतं नश्यति शाश्वतं[13] ।
पथिकाश्चोपतप्यन्ति मायायाच्योपजीविकाः[14] ॥

---

1 Mss add तथा वाणिजकाश्चैव सात्वराहा [ सार्थवाहा ]श्च ये नराः । Tib *lit.* वाणिजकास्तेषां नायका ( =सार्थवाहाः ) वाणिजका दूरङ्गमा एते व्यसनमर्च्छन्ति । 1-2 Ch[1] वाणिजका नायका ( of army ) दूरङ्गमाः पार्थिवाः पार्वतीयाश्च एते व्यसन...... । 3 Mss & Tib place this line before पार्थिवाः पार्व...... । Ch[1] reads it thus at the end. 4 Tib एकमस्ताश्च ये नागाः । Ch[1] omits श्वाना—मृगाः । It reads 'birds' in their place. 5 Mss विद्या । Tib : *dug. snags. mkhan. rnams* =विषवैद्याः । 5-6 Ch[1] "Those who make poison-mixtures". 6-7 Ch[1] omits. 8 Tib *śin. las.* 9 Ch[1] omits this line. 10 Mss संवर्द्धा । Tib ये जाता ये चोत्पादिताः । Ch[1] omits this *pāda.* 11 Mss शत्रु । 11-12 Tib *dus. 'gyur. shin.* Ch[1] "There will be harmony of seasons". 13 B -तिर्यग्वाति चैवाति... । P तिर्यश्चाति शाश्वतं । 13-14 Translations omit these two sentences. 14 Mss मासयाचो- । 1-14 Ch[2] omits.

धर्मरता आसनिका[1] ये च शुल्कोपजीविनः ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥

चलत्युत्तरफल्गुन्यां वणिजो द्वीपयात्रिकाः ।
सार्थवाहा आसनिका[1] ये च शिल्पोपजीविनः[2] ॥
अङ्गा विदेहमगधा नैर्ऋताः स्त्रीपरिग्रहाः[3] ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥

हस्तेन चलिता भूमिः कुम्भकार[4] चिकित्सकाः ।
गणमुख्या[5] महामात्राः[5] सेनाध्यक्षाश्च ये नराः ॥
तारमका (?) नारपटा (?) विप्सरः (?) कौटिका अपि[6] ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥

चित्रायां चलिता भूमिः कारुका उपकल्पकाः ।
कुमार्यः सर्वरत्नं च सस्यानां[7] बीजकैः सह ॥
वङ्गा दशार्णकुरवश्चेदिमाहिषकास्तथा ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः[8] ॥

स्वातौ प्रचलिता भूमिश्चौरा ये च कुशीलकाः[9] ।
हिंसका ये च तत्कर्मरता[10]ऽभ्यर्थित[11]मूषकाः[12] ॥
हिमवत[13]उत्तरेण वायुभक्षास्तपस्विनः[14] ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥

1 Translations omit it. 1-2 Tib -वाहास्तापसाश्च गिरिगुहोपजीविनः । Ch[1] "merchants and those who live in hills". 3 Ch[1] reads only महामन्त्रिणः for the whole line. 4 Ch[1] omits. 5 Ch[1] "good or expert in strategy". 6 This line is omitted in translations. 7 Mss संकानां । 8 Translations omit this and the preceding three lines. They remark : "If there is earthquake under *citrā*, the result will be the same as in the preceding one ( *viz.* हस्त ) ।" 9 Ch[1] "musicians (कुशीलवाः ?) ।" 10 Mss omit रता and read ये च in its place. 11 Mss -थिक- । 11-12 Tib घातकपतिः ( *śan. pa'i. bdag. po* ). 12 Ch[1] "butchers, travellers, elephants and horses". 13 Mss हेमवत्या उत्तरानश्च । Tib omits. 13-14 Ch[1] "those who live in mountains".

दुर्भिक्षं च करोत्याशु धान्यमल्पोदकं[1] भवेत् ।
दरीपर्वतमूलानि[2] गच्छन्ति च तदा भुवि ॥

पूर्वाषाढे चलेद् भूमिर्जलजा मत्स्यशुक्तिकाः[3] ;
शिशुमारा उद्रकाश्च[4] नक्रा मकरकच्छपाः[5] ॥
जातिगोत्रप्रधानाश्च धनिनो[6] ऽथ विचक्षणाः ।
द्वितीयाभिजाताश्च[7] [8]महाविद्याकराश्च ये[9] ।
एते व्यसनमच्छेन्ति भूमिचालविचालिताः ॥

उत्तरस्यां चलेद् भूमिः शिल्पिनामनयो महान्[10] ।
अयस्काराः स्थपतय[11] स्त्रपुकारा[12]श्च तक्षकाः[13] ॥
दरिद्रा[14] धनिन[15]श्चापि शिल्पिनो[16]विविधा[17] अपि ।
एते व्यसनमच्छेन्ति भूमिचालविचालिताः[18] ।
ग्रामकुटानि[19] च घ्नन्ति[20] सचलस्थावराणि च[21] ॥

वैष्णवे चलिता भूमिस्तदेति[22] यदनीप्सितं[22] ।

1 Mss -ल्पगदं । Tib ( दुर्भिक्षं च भवत्याशु ) उदकस्य ह्यभावतः । Ch¹ reads "(There will be famine ) and milk ( of cattle ) will dry". 2 Tib & Ch¹ omit दरी । Tib reads simply पर्वताः and Ch¹ "hills and rocks". 3 Mss -वाणिजाः । Ch¹ "animals or creatures living in water". 4 Mss उलूकाश्च । Tib omits it. 5 Tib मकरकच्छपास्तथा । Mss -मकरमत्स्यजाः । 3-5 Ch¹ omits. 6-7 P omits. 7 B द्वितीयानभिसारांश्च । Tib *gñis. pa. rigs. daṅ. ldan. rnams. la* =द्वितीयाभिजाताः =क्षत्रियाः ? 8-9 Mss -तद्देतेषु महाभयं । Tib ( Nar. ) *rig. pa. chen. pa. 'byuṅ. śiṅ.* This reading is adopted here. Ch¹ omits this line. 10 Tib *gnod. pa. mi. ( ni ? ) 'byuṅ* =अनयो भवति । Ch¹ omits this *pāda*. 11 B -स्कारास्तुयतय- । Tib *shal. shal. mkhan.* Ch¹ ताम्रकारा- । 11-12 P omits. 12 Tib इषुकारा- । 13 Ch¹ omits. 14 Mss कन्यका ( the smallest =poor, inferior ? ). 14-15 Ch¹ "poor and inferior =दरिद्रः प्रहीणश्चापि ?" 15 Tib omits. 16-17 Ch¹ omits. 18 Tib omits this line. 19 Mss कू- । 20 Mss भ्रन्ति.च । 21 Tib *groṅ. daṅ. ñe. ba'i. skam. la. gnas. pa la. gñod. par. 'gyur. ro.* Ch¹ reads : "Village-barracks ( ग्रामकुटानि ) are removed". Mss place this sentence before the preceding one. 22 Mss & Tib ये नरा राजपूजिताः ।

साजेन चलिता भूमी राक्षसान् [1]घातकांस्तथा ।
औरभ्रिकान्[2] सौकरिकान्सौवीरांश्च निपातयेत् ॥
वणिज्य[3] जीविनो वैश्यान् शूद्रांश्च करीतीनपि[4] ।
यवनान्[5] मालवाद्यांश्च[6] ग्रन्थिभेदांश्च नाशयेत्[7] ॥
अहिर्बुध्न्ये चलेद् भूमिर्वणिजामनयो महान्[8] ।
धर्मरताश्च ये सिद्धा[9] ये च शौल्किक[10]कर्मिणः ॥
शिबीन्वत्सान्तथा[11] वात्स्यान्[12] क्षत्रियानार्जुनायनान्[13] ।
सिन्धुराज[14]धनुष्पाणी[15]न्सर्वान[16]र्द्यते[17]ऽचिरात्[18] ॥
रेवत्यां चलिता भूमिः संग्रामः स्यात्सुदारुणः ।
ग्रामघाताश्च वर्तन्ते ग्रामो ग्रामं च हिंसति[19] ॥
नौचरा[20]नुदकाजीवान्[21] रमठान्[22] भरुकच्छकान्[23] ।
सुधन्वान्[24] अभिसारां[25]श्च सर्वसेनांश्च[26] निर्दहेत्[27] ॥

---

1 P गोघात- । Tib ( Nar. ) राक्षसग्रहग्रस्तान् घातकांस्तथा । 2 Tib & Ch[1] omit. 3 B -क- । P -ग- । 4 Mss करितानपि । Tib नटान् । 5 Mss omit. 5-6 Tib reads : *nas. glin. pa. rnams. dan. rta. rnams. dan. gyad. kyi. yul. ba rnams. dan. khu. ljo* (?) *dan. ldan. pa'i. bud. med. rnams. dan* यवनान् अश्वान् मल्लान्...... (?) 3-7 Ch[1] "Who live by mountains and rivers, all those bad men perish". 7 Mss add एते व्यसनम...... । 8 Tib भवेत् । Ch[1] omits this *pāda*. 9 Mss -रता अन्नार्थिका । Ch[1] reads this *pāda* as : "those who cultivate bliss ( पुण्यार्जकाः पुण्यरताः or धर्मरताः )" । 10 Tib शौल्किक- । Mss सौक्तिक- । Ch[1] "those who live by water". 11 Mss शिवीत्वत्सतिन्यो । 12 Mss वात्स्यात् । 13 Mss अर्जनापरान् । Tib reads this line as : कुटुम्बबान्धवांश्चैव क्षत्रियानार्जुनायनान् । Ch[1] omits this line. 14 Mss -ज्य- । 15 B -ष्पादान् । P -ष्पादी । 14-15 Ch[1] omits. 16 Mss omit सर्वान् । 17 Mss अथयते । Tib *lit.* तेषामनर्थं भवेत् । 18 Tib चिरात् । Mss add एते व्य... । 16-18 Ch[1] "All of them perish". 19 Ch[1] "Great harm is caused to the country. Guests become powerful and hosts weak". 20 Mss -चलान् । 20-21 Tib नैर्ऋतांश्च तथा चीनान् । 22 B ग्रामवान् । P omits. Tib : *ra. ma. ta. na. gnas. pa. rnams. dan.* 23-24 Mss सु (सु)नोध्वान् । Tib *shin las. bzan. po. byed. pa. rnams* =सुकर्षकान् । 25 B -वारां- । Tib द्रोणमुख्यान् । 26 Tib सर्वसेनापतींश्च । 27 B निर्दिशेत् । Mss add एते व्यसनमच्छन्ति...... । 23-27 Ch[1] omits these two lines.

अश्विन्यां चलिता भूमिरश्वानामनयो महान्[1] ।
ग्रामघाताश्च वर्तन्ते[2] भ्राता भ्रातॄन् जिघांसति[3] ॥
या[4] चात्र गर्भमाधत्ते[5] ये च जाताश्च[6] तानिह[7] ।
त्रीणि वर्षाण्यतो दुःख[8] मुपैति च निरन्तरं[9] ॥
सहिता[10]श्चित्रगर्भाश्च ये ह्यन्ये[11] चाङ्गनाजनाः[12] ।
आर्जुनायना राजन्याः[13] सुष्ठु त्रींश्चापि हिंसति[14] ॥

भरण्यां चलिता भूमिश्चौराणामनयो महान्[15] ।
विटा[16] द्यूतकराश्चैव ग्रन्थिभेदाश्च ये नराः ॥
आदर्श[17]चक्राटा[18] धूर्ता[19]स्तथा[20] बन्धनरक्षकाः ।
अन्तावशायिनः[21] पापाश्चरन्ति ये तु दुर्जनाः ।
तेऽपि तत्र विपद्यन्ते[22] भूमिचालविचालिताः[23] ॥

वेपितायां तु मेदिन्यां भवे[24]द्रूपमनन्तरं[25] ।
सप्ताहाभ्यन्तरात्तत्र मेघो भवति प्रार्थितः[26] ॥

---

1 Ch[1] omits this *pāda*. 2 Ch[1] omits this *pāda*. 3 Tib *lit.* भ्रातृहत्या भवति । 4 Mss ये । 5 Mss आदधति । 6 Mss याता- । 7 Mss तान्विह । Ch[1] गर्भपातो भविष्यति । 8 Tib त्रिदुःखं । 8-9 Ch[1] "Three kinds of calamities spread. Great evils amass like clouds". 10 Mss न हि तां । 10-12 Tib reads : *bdun. rgyud. daṅ. mṅal. na. gnas. pa. daṅ. bza'a. btuṅ. 'thuṅ. ba. daṅ* =सप्ताचार्याश्च ( *rgyud. pa* =religious teachers ) कुक्षिस्था ये चान्नपानपा जनाः । Ch[1] omits this line. 11-12 Mss ये च चाङ्गनका जनाः । 13 Mss अर्जनायन रा- । 14 Tib reads this *pāda* as : परस्परं जिघांसति ( or च हिंसति ) Ch[1] omits this line. Mss add एते व्य... । 15 Tib adds (तेषां) कलहश्च भविष्यति । Ch[1] reads 'death' for अनय । 16 Tib omits. 17 B आद्रंश । P आद्रेण । 18 B चक्रान्तरता ( P द्रा or टा ) । Tib आदर्शचक्रेण वञ्चकाः ( *me. loṅ. gi. 'khor. los. slu. bar. byed. pa* ). 19 Tib omits. 20 B omits. 21 Tib wrongly translates it as : *zas. sdom. pa.* 22 Mss निपतन्ति । 16-23 Ch[1] "There will be want of fruits and wood ( timber ). The rest is the same as stated above". 24-25 Tib & Ch[1] omit. 25 Before this line Ch[1] adds : "Three great characteristics are to be explained here". 26 Mss पार्थिवः । Tib महामेघो भविष्यति ( *lit.* चलिष्यति ) । Ch[1] omits this verse.

स्निग्धो ह्यञ्जनसंकाशो महापर्वतसन्निभः ।
इन्द्रश्च वर्षते तत्र महर्षेर्वचनं यथा[1] ॥
[ एवं निगदितं नाथैरिन्द्रश्चात्र प्रवर्षति ॥ ]

स्वस्तिका[2] कारसंकाशा इन्द्रवज्र[3] ध्वजोपमाः[4] ।
दृश्यन्तेऽभ्रा हि[5] सन्ध्यायां ग्रस्त्वा[6] चन्द्रदिवाकरौ ॥
तदा नभसि जायन्ते मेघा डाडिम्बसन्निभाः[7] ।
लक्षणं तादृशं दृष्ट्वा विद्या[8] त्तान्निन्द्रकम्पितान्[8] ।
स निर्देशो भवेत्तत्र महर्षेर्वचनं यथा ॥

अतीव[9] तत्र विश्वस्तः[10] सर्वबीजानि वापयेत् ।
व्यवहारांश्च कुर्वीर[11] न्निर्भयास्तत्र वाणिजाः[12] ।
सर्वेषां भूमिकम्पानां प्रशस्ता इन्द्रकम्पिताः[13] ॥

वेपितायां तु मेदिन्यां भवे[14]द्र पमनन्तरं[15] ।
सप्ताहाभ्यन्तरे तत्र मेघः संच्छादयेन्नभः ॥

---

1 Mss तिष्ठन्ते ( P न्त ) नाथ निगदंति तद्देवेन्द्रश्चात्र प्रवर्षति । It may be corrected as : तदा नाथा निगदंति इन्द्रश्चात्र प्रवर्षति । Even if it is corrected thus, the metre remains defective and the construction clumsy. Tib reads : तन्द्रा प्रवर्धते तत्र महर्षेर्वचनं यथा । Ch[1] omits this and the following two verses. 2 Mss omit का । 3 Mss चक्र । 4 Tib omits -ध्वज । 5 Mss -णि । 6 Mss ग्रास(से) । 7 Tib omits डाडि- । 8 Tib : *the. tshom. skyed* ( Nar. *bskyed* ). *pa'i. sprin. ldan. shin. 'brug. bsgrags. pa. 'byun. bar. rig. par. bya'o* = संदेहजनितं (?) मेघवत् ( इन्द्र ? ) निर्घोषं विद्यात् । 2-8 Ch[1] ( Omitting इन्द्रकम्पित and describing first of all the earthquake called अग्निकम्पित ) reads : "If there be no calamity, within seven days (after the earthquake) if it rains, seeds should be sown ( सर्वबीजानि वापयेत् ) । There will be good harvest. People will have no calamities". 9-10 Tib *de. ltar. śes. nas. gdon. mi. za. bar* =एवं ज्ञात्वा विश्वस्तः ( being sure ) न भक्षयित्वा (?) ( सर्वबीजानि वापयेत् ) । 11 P कुर्वीत । B omits. 12 Mss -रि- । 13 Mss -कल्पिताः । Tib एवं रूपाः । 8-13 Ch[1] omits. 14-15 Tib simply तदनन्तरं । Ch[1] omits.

ततोऽनुबद्धा जायन्ते अभ्राः कौशेयसन्निभाः ।
अनुलोमं[1] च संयान्ति चरन्तः[2] पश्चिमां दिशं[3] ॥
शिशुमार-उद्रकाणां[4] मत्स्यमकरसन्निभाः[5] ।
दृश्यन्तेऽभ्राश्च[6] सन्ध्यायां[7] ग्रस्त्वा[8] चन्द्रदिवाकरौ[9] ॥
लक्षणं तादृशं दृष्ट्वा विद्यात्ताञ्जलकम्पितान् ।
स निर्देशो भवेत्तत्र महर्षेर्वचनं यथा[10] ॥

स्थलेषु[11] गिरिकूटेषु क्षेत्रेषूपवनेषु[12] च ।
स्थाप्यन्ते तत्र बीजानि निम्ने नश्यन्ति वै तदा[13] ॥
पङ्केनापि जलेनापि नश्येयू रजसापि वा[14] ।
एतेषां भूमिकम्पानां प्रशस्ता जलकम्पिताः ॥

वेपितायां तु मेदिन्यां भवेद्रूपमनन्तरं[15] ।
सप्ताहाभ्यन्तरे तत्र वाता वान्ति सुदारुणाः ॥
दृश्यते कपिला सन्ध्या[16] चन्द्रसूर्यौ तु लोहितौ ।
लक्षणं तादृशं दृष्ट्वा जानीयाद्वायुकम्पितान् ॥

1 Tib प्रतिलोमं । 2 Tib गर्जन्तः । 3 Ch¹ "after the earthquake within seven days, if clouds sail from east to west (*lit.* sails east & west)". 4 Tib & Mss उल्कानां । Ch¹ omits this *pāda*. 5 Ch¹ "like fish and tortoise". 6 Mss -णि । 7 Tib omits. 8 Mss ग्रास, ग्रस । 6-9 Ch¹ "Their (clouds') black colour covers the sun and the moon". 10 Ch¹ omits this line. 11 Tib *sgaṅ* =hill-spur. 12 Tib स्थलेषु (*lit.* अनार्द्रभूमिषु) । 13 B ततः । 11-13 Ch¹ reads: "This year there will be much rains, high lands should be cultivated. Other phenomena are the same as stated under the नक्षत्र ।" 14 Tib *de. bshin. du. 'dam. daṅ. chur. 'gyur. shiṅ. dma'a. bar. 'dus. par. 'gyur. ro.* "So (if they are sown) in mud and water, they deteriorate" Ch¹ omits this line and the following. 15 Ch¹ omits this *pāda*. Tib reads simply तदनन्तरं । 16 Ch¹ omits this *pāda*.

ततो भवति निर्देशो महर्षेर्वचनं यथा[1] ।
न तत्र [2]प्रवसेत्प्राज्ञ आत्मानं चात्र गोपयेत् ॥
गुह्यमावरणं कुर्यात्प्राकारपरिखां खनेत्[3] ।
प्रातिसीमा विरुध्यन्ते नराणां जायते भयं[4] ॥

एतेषां भूमिकम्पानां सर्वेषां कीर्तिता गुणाः[5] ।
विशेषेण मनुष्याणां निर्मिता वायुकम्पिताः[6] ॥

कम्पितायां तु मेदिन्यां [7]भवेद्रूपमनन्तरं[7] ।
सप्ताहाभ्यन्तरात्तत्र उल्कापाताः सुदारुणाः ॥
सन्ध्या च लोहिता भाति चन्द्रसूर्यौ तु लोहितौ[8] ।
लक्षणं तादृशं दृष्ट्वा विज्ञेया अग्निकम्पिताः ॥
अग्निर्दहति काष्ठानि रक्षितानि धनानि च[9] ।
दृश्यन्ते धूमशिखराः शस्त्रं च स्विद्यते[10] भृशं ॥
वीणा[11]श्च दिवि दृश्यन्ते नवमासान्न वर्षति ।
एतेषां भूमिकम्पानां जघन्या अग्निकम्पिताः[12] ॥

[13]जयति अहनि पूर्वे क्षत्रियान्पार्थिवांश्च
[14]हयगजरथमुख्यान्[15] मन्त्रिणो[16] मध्यमाह्ने[17] ।

1 Ch[1] omits this line. 2 Tib (प्राज्ञेन) गमनं न कर्तव्यं । 3 Tib (Nar.) omits this line. 1-3 Ch[1] omits. 4 Tib प्रतिद्वन्द्विभ्यो भयं भवति । Ch[1] "During the year, the army should not be sent out (to fight or attack other countries)". 5-6 Ch[1] omits. It adds : "There will be a great fire which will burn (things) and cause great harm". 6 Tib अग्नि- । 7 Ch[1] omits this *pāda*. Tib reads simply तदनन्तरं । 8 Ch[1] "There appear red clouds, the sun and the moon do not shine". 9 Ch[1] omits this line here but reads it elsewhere (see above). 10 Mss स्वी- or खी- । Tib वर्षते । Ch[1] omits this line. 11 Tib *chu. 'khyil* =विला- ? 12 Ch[1] omits this line and the preceding one. 13 Mss प्रजयति । Tib व्यथयति (*lit*......पार्थिवानां व्यथा भवति) । 14 Mss सहयगज- । 15 Mss -खान् । Tib omits रथमुख्यान् । Ch[1] omits मुख्यान् । 16 Tib महाम- । 17 B -मह्नि ।

व्यथयति अपराह्णे गोपशून्[1] वैश्यशूद्रान्[2]
प्रदहति निशिसन्ध्या[3] तस्करानन्तवासान्[4] ॥

रजनिमिह प्रदोषे[5] हिंसते म्लेच्छसंघान्[6]
स्त्रियमपि च नपुंस[7] श्चार्धरात्रेष्वनन्तान्[8] ।
कृषिवणिगुपजीव्यान्[9] हन्ति यामे तृतीये[10]
व्यथयति सुरपक्षं रौद्रकर्मान्तकृष्णे[11] ॥

प्रदहति शशिपक्षे याज्ञिकं[12] ब्रह्म क्षत्रं[13]
श्रपयति शुचिवृत्ता[14]नेव[15] धर्मे प्रधानान्[16] ।
[17]विदुषि च मृदुभावं विन्दते यो ह्यधीते
स भवति नृपपूज्यो ब्राह्मणो वेददर्शी[18] ॥

1 P omits शून्। 2 Tib & P omit वैश्य- । Ch[1] omits शूद्र, it reads: "different domestic animals and farmers". 3 Tib omits सन्ध्या। 4 B तनूरानन्तवाससः। P तस्करानन्तवाससान् । Tib simply तस्करान् । Ch[1] "thieves and servants (अन्तवास ?)" । 5 Tib *nam. nans. ba. ni.* =रजनेरिह प्रभाते । 6 Tib *mtha'a. khob. pa. rnams.* Ch[1] "poor people". 7 Omitted in translations. 8 Tib reads this line and the preceding one as: म्लेच्छानां मृत्युभयं भवेत् । तथाऽर्धरात्रेऽष्टदिवसव्यापिव्याधिर्भवति । ततो रोगाद् मुच्यन्ते । अतःपरं स्त्रीपुंसानां ( व्याधिर् ) भवेत् । 7-8 Ch[1] omits. 9 B -णिजव्यवहारां । P -रांश्च । Tib कृषिकर्मकारिणं । Ch[1] reads only "merchants". 10 Ch[1] "in the first part of the month". 11 Tib कृष्णपक्षे रौद्रकर्मकारिणं चण्डालं व्यथयति । Ch[1] "By the middle of the month, harm will be done to heroic people and young ones". 12 Mss योगिकं । 13 B -क्षेत्रं । Tib ब्राह्मणयाज्ञिकं क्षेत्रं च । 14 Tib शिशुवृद्धान् ( *lit.* वृद्धाः f.) । 15 Mss -न्येव । 11-16 Ch[1] "By the last part of the month ( शशिपक्षे ), it will cause only a little harm". 17-18 Tib reads: *dman. pa. dan. dge.* ( Nar. *dgro. dgra* ?) *ba. dan. dma'a. bar 'gyur. ba. rnams. śes. śin. gan. gis. sna. ma'i. ran. bshin. du. gyur. pa. śes. pa'i. bram. ze'i. ñi. mar. gyur. par.* ( *pas* ). *blto'o.* Ch[1] omits.

बृहस्पतेश्च [1]चत्वारि समानि[2] शुभकर्मणा[3] ।
चत्वारि [4]सूर्यकर्माणि तुल्यानि [5]शुक्रकर्मणा ।
सोमकर्माणि चत्वारि ब्रह्मकर्म[6] च तत्समं[7] ॥

अयं भोः पुष्करसारिन् भूमिकम्पनिर्देशो नामाध्यायः[8] ।

अथ भोः पुष्करसारिन्नमीषामष्टाविंशतीनां नक्षत्राणां रोगोत्पत्तिं नामाध्यायं व्याख्यामि । तच्छ्रूयतां[9] । कथयतु भगवान्[10] ।

कृत्तिकासूत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
चतूरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
अग्निर्हि देवता तत्र दध्ना[11]ह्यस्य[12] बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

रोहिण्यामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
पञ्चरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
देवः प्रजापतिस्तत्र शुद्धमाल्यैर्बलिं हरेत्[13] ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

व्याधिर्मृगशिरोभूतः स्त्रिया वा पुरुषस्य वा ।
अष्टरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
सोमो हि देवता तत्र मण्डेन[14] तु बलिं हरेत् ।
अनेन बलिदानेन तस्माद्रोगाद्विमुच्यते ॥

1 Mss omit च । 2-3 Mss मासान्यशु( न्पशु )क्रमना । Tib बृहस्पतेश्चतुर्विधानि शुभकर्माणि तुल्यरूपाणि or तुल्यानि ( बृहस्पतेश्च चत्वारि समानि शुभकर्मणा ) । 4 Tib शुद्र- । 5 Mss शशि- । Tib काव्य( शुक्र )कर्मणा । 6 Mss -क्रमं । 7 After this, Tib adds : विदुषो व्यथयन्ति । 1-7 Ch[1] omits. 8 Tib omits this sentence. 8-10 Ch[1] omits. 9-10 Tib omits these sentences. Ch[2] omits this chapter. 10 B भवान् । 11 Ch[1] "curd and rice". 12 B ह्यत्र । 13 Ch[1] "One should offer incense to the fire". 14 Tib *sran. sñon. gyi. 'khur. ba* =cake of pulse. Ch[1] 'pulse'.

आर्द्रायामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
दशरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
रुद्रो[1] हि देवता तत्र पायसेन बलिं हरेत् ।
अनेन बलिकर्मण[2] तस्माद्रोगाद्विमुच्यते ॥

पुनर्वसौ भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा ।
अष्टरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
आदित्यो देवता तत्र गन्धमाल्यै[3] र्बलिं हरेत् ।
अनेन बलिकर्मण[4] तस्माद्रोगाद्विमुच्यते ॥

पुष्ये समुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
स्तोककालं[5] भवेत्तस्य[6] पञ्चरात्राद्विमुच्यते ॥
देवो बृहस्पतिस्तत्र गन्धमाल्यै[7] र्बलिं हरेत् ।
अनेन बलिकर्मण तस्माद्रोगाद्विमुच्यते ॥

अश्लेषायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा ।
न तं वैद्याश्चिकित्सन्तु[8] सर्पस्तत्र तु दैवतः[9] ॥

मघासमुत्थितो[10] व्याधिः स्त्रिया वा पुरुषस्य वा ।
अष्टरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
पितरो देवतास्तत्र कृसरेण[11] बलिं हरेत् ।
अनेन बलिकर्मण तस्माद्रोगाद्विमुच्यते ॥

पूर्वफाल्गुनीजा[12] व्याधिः स्त्रिया वा पुरुषस्य वा ।
सप्त[13]रात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥

---

1 Ch[1] =चतुर्मुखः, ब्रह्मा ? 2 B -दानेन । 3 Tib -लेपैः । Ch[1] -पुष्पैः । 4 B -दानेन । 5-6 Translations omit. 7 Tib लेपमाल्यैः । Ch[1] पुष्पैः । 8 Tib भैषज्यैश्चिकित्सितोऽपि रोगान्न मुच्यते । Ch[1] "They mostly die, can not be cured". 9 Ch[1] omits this *pāda*. 10 P मघासूत्थितो । 11 Tib *'bru. daṅ. ji. la.* 12 Mss पूर्वफाल्गुन्यूत्थितो । 13 Mss पञ्च- ।

अर्यमा देवता तत्र[1] गन्धमाल्यै[2] र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

[3]उत्तरायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा ।
न तं वैद्याश्चिकित्सन्तु[4] भगो[5] ऽप्यत्र तु देवता ॥

हस्तेनाप्युत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
पञ्चरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
रविर्हि देवता तत्र[6] गन्धपुष्पै[7] र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

चित्रायामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
अष्टरात्रं भवेद् व्याधि[8] स्ततश्चोर्ध्वं विमुच्यते[9] ॥
त्वष्टा हि[10] देवता तत्र[11] घृत[12]मुद्गै र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

स्वात्यां समुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
क्लेशितो हि भवेद् व्याधिः पञ्च[13]विंशतिरात्रिकः ॥
देवतात्र भवेद् वायु[14]श्चित्रमाल्यै[15]र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

विशाखायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा ।
गुरुकोऽसौ भवेद् व्याधिरहान्येकोनविंशतिः[16] ॥

1 Ch[1] omits this *pāda*. Tib सर्पे for अर्यमा । 2 Ch[1] -पुष्पैः । 3 Mss उत्तरफाल्गुन्युत्थितो । 4 Mss प्रशंसन्तु । Ch[1] "It is incurable (or hardly cured)" Tib *lit.* चिकित्साभेषजै रोगो न प्रशमति । 5 Tib यमो । Ch[1] omits. 6 Ch[1] omits this *pāda*. 7 Mss घृत- । Tib गन्धमाल्यैः । 8 Tib omits this *pāda*. 9 Tib "They are cured". 10 Tib गन्धर्वः । 11 Ch[1] omits this *pāda*. 12 Ch[1] omits घृत । Tib *nas. kyi. ljan. bu* =green (leaves of) barley. 13 Tib (Nar.) द्वाविंश- (Dege) अष्टाविं- । 14 Ch[1] omits this *pāda*. 15 Ch[1] पुष्पैः । 16 Tib एकविंशतिः ।

इन्द्राग्नी देवते तत्र[1] गन्धमाल्यै[2] र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

अनुराधोत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
अर्धमासं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
मित्रो[3] हि देवता तत्र घृतपात्रं[4] बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

ज्येष्ठायामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
क्लेशिको हि भवेद् व्याधिरहोरात्रत्रयोदश ॥
इन्द्रो हि देवता तत्र गन्धमाल्यै[5] र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

मूले समुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
मासिको हि भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
नैर्ऋति[6] र्देवता तत्र मद्यमांसै[7] र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

पूर्वाषाढे भवेद्[8] व्याधिः स्त्रिया वा पुरुषस्य वा ।
सांक्लेशिको[9] भवेद् व्याधिरष्टौ मासान्न[10] संशयः ॥
आपो हि देवतास्तत्र कृसरेण बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

उत्तरायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा ।
सप्तरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
विश्वो[11] हि देवता तत्र पायसेन बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

---

1 Mss देवो हीन्द्रायणीपुत्रो । Ch[1] omits this *pāda*. 2 Ch[1] पुष्पैः । 3 Tib सूर्यो । Ch[1] omits. 4 Ch[1] घृतैः । Tib घृतपूर्णं । 5 Ch -पुष्पैः । 6 Tib वृषलो or शूद्रो । Ch[1] omits. 7 Ch[1] मुद्गैः । 8 B पूर्वाषाढाभवो । 9 Ch[1] omits. 10 Ch[1] दिवसा- । 11 Mss विश्वा ।

अभिजिदुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
षण्मासान्संभवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥
विष्णुश्च देवता तत्र दधिमण्डं बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते[1] ॥

श्रवणेनोत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
गुरुको हि भवेद् व्याधिः पूर्णं द्वादशमासिकं[2] ॥
विष्णु[3] हि देवता तत्र गन्धमाल्यै[4] र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

धनिष्ठायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा ।
गुरुको[5] हि भवेद् व्याधिः पूर्णमासान् त्रयोदश ॥
वसवो[6] देवतास्तत्र घृतमाल्यै[7] र्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

शतभिषोत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
त्रयोदश[8] दिवस्तत्र ततश्चोर्ध्वं विमुच्यते ॥
वरुणो देवता तत्र पायसेन बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥

पूर्वभद्रोत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
न तं वैद्याश्चिकित्सन्तु[9] अहिबुध्न्यो[10]ऽत्र दैवतः[11] ॥

उत्तरभाद्रजो[12] व्याधिः स्त्रिया वा पुरुषस्य वा ।
सप्तरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥

---

1 अभिजित् is omitted in translations. 2 Ch[1] -दिवसं । 3 Ch[1] पर्वतः । 4 Ch[1] पुष्पैः । 5 Ch[1] omits. 6 Mss वासवो देवता तत्र । Tib वसुदेव । Ch[1] omits. 7 Tib गन्धमाल्यैः । Ch[1] घृतगन्धपुष्पैः । 8 P -दिवसास्त- । Tib ( Nar. ) सप्तदश- । 9 Mss -न्ति । 10 Mss बुध्नो । 11 Ch[1] reads this line as : "It is difficult to cure". Tib omits this verse. 12 B -राम- । P -रामाद्रोत्थितो । Tib पूर्वभाद्र- ।

कृत्तिकासु भोः पुष्करसारिन् बद्धो[1] वा रुद्धो वा त्रिरात्रेण मोक्ष्यतीति वक्तव्यः। रोहिण्यां बद्धो वा रुद्धो वा त्रिरात्रेण मोक्ष्यतीति। मृगशिरसि बद्धो वा रुद्धो वा एकविंशति[2] रात्रेण मोक्ष्यतीति। आर्द्रायां बद्धो वा रुद्धो वा ऽर्धमासेन[3] मोक्ष्यतीति। पुनर्वसौ रुद्धो वा बद्धो वा [4]सप्तरात्रेण। पुष्ये त्रिरात्रेण। अश्लेषायां त्रिंशद्रात्रेण[5]। मघासु षोडशरात्रेण। पूर्वफाल्गुनीषु दशरात्रेण। उत्तरफाल्गुनीषु सप्तरात्रेण। हस्ते पञ्चरात्रेण। चित्रायां सप्तरात्रेण। स्वात्यां दशरात्रेण[6]। विशाखायां षड्त्रिंशद्रात्रेण[7]। अनुराधाया-मेकत्रिंशद्[8] रात्रेण। ज्येष्ठायामष्टादशरात्रेण[9]। मूले षट्त्रिंश[10]द्रात्रेण। पूर्वाषाढायां चतुर्दशरात्रेण। उत्तराषाढायां चतुर्दशरात्रेण। अभिजिति षड्रात्रेण[11]। श्रवणे धनिष्ठायां शतभिषायां पूर्वभाद्रपदे उत्तरभाद्रपदे रेवत्यां चतुर्दशरात्रेण[12]। अश्विन्यां त्रिरात्रेण। भरण्यां बद्धो वा रुद्धो वा परिक्लेश[13]मवाप्स्यतीति[13] वक्तव्यः।

अयं भोः पुष्करसारिन् बन्धननिर्मोक्षो नामाध्यायः।

अथ भोः पुष्करसारिन् तिलकाध्यायं व्याख्यास्यामि। तच्छ्रूयतां। [14]कथयतु भगवान्[14]॥

मूर्ध्नि तु यस्यास्तिलकोऽस्ति सूक्ष्मः स्निग्धो[15] भवेत् पद्मसमानवर्णः[16]।
राजा तु तस्या भवतीह भर्ता स्तनोपरिष्टा[17]त्प्रतिबिम्बमाहुः[18]॥

---

1 Ch¹ & Tib कारारुद्धः। 2 Tib विंशति-। 3 Mss -रात्रेण। 4 P omits रुद्धो वा बद्धो वा। Tib (Dege) एकरा- (Nar.) त्रि-। 5 Tib त्रिरा-। 6 Tib द्वादश-। 7 Mss षट्त्रिंशद्रा-। 8 Tib ऊनत्रिंशद्। Ch¹ ऊनविंश-। 9 Tib (Dege) दश- (Nar.) चतुर्दश-। 10 Tib -विंश-। 11 Ch¹ चतुर्दश-। Tib omits अभिजित्। P षड्दिवारात्रेण। 12 Mss श्रवणे पञ्चरात्रेण, धनिष्ठायामष्टाविंशतिरात्रेण, शतभिषायामष्टादशरात्रेण, पूर्वभाद्रपदायां (P -पदे) कालान्तरेण, उत्तरभाद्रपदायां (P -पदे) त्रयोदशरात्रेण, रेवत्यां चतुर्दश-। 13 Ch¹ "He is hardly set free". 14 Ch¹ omits. Tib omits भग-। P adds त्रिशङ्कः। Ch² omits this chapter. 15 Tib omits. 16 Tib "white colour". 17 Mss -रिस्ता-। 18 Ch¹ reads : "If a woman has a तिलक on the neck, the colour of which is purple (or dark-brown) her husband must be a king". Tib reads the last *pāda* as : "If the lips are purple like the lotus".

शीर्षे तु यस्यास्तिलकालकः स्यात्
सूक्ष्मो भवेदञ्जनचूर्णवर्णः[1] ।
सेनापतिस्तस्या भवेद्धि[2] भर्ता
स्तनान्तरेऽस्याः प्रतिबिम्बकं[3] स्यात्[4] ॥
भ्रुवोन्तरेऽस्या[5] स्तिलकालकः स्याद्
दुश्चारिणीं तां प्रमदां वदन्ति[6] ।
पञ्चैव तस्याः पतयो भवन्ति
बह्वन्नपानं लभते च नारी[7] ॥

---

1 Tib *thig. bu. mig. gi. kha. dog. lta. bu. yod. na.* 2 Mss omit हि । 3 Tib *thig. le. lta. bu'i. sme. ba* =बिन्दुरिव तिलकः । Ch[1] reads : "If the colour ( of the तिलक on the neck ) is black and if there is a बिम्ब between the breasts, her husband will be a general". 4 Mss add here the following *ślokas* which are omitted in both Tibetan and Chinese translations :

सहजातं मनुष्याणां पश्चाज्जायति वा पुनः ।
नारीणां तिलकानां च स्थानास्थानस्य लक्षणं ॥
लाभालाभं सुखं दुःखं जीवितं मरणं तथा ।
प्राप्नुवन्ति यथा नार्यस्तिलकं तं निबोधयेत् ॥
तत्राभिघातो ( Mss तं ) गण्डश्च ( Mss गण्डं )
पिटको ( B कं, P क ) दद्रूरे ( Mss मे ) व च ।
( दशन इति पाठः ) दं ( Mss द ) शनवर्णभेदश्च विज्ञेयः पिटकादिभिः ॥
( Mss उपरिष्टाल्लक्षयित्वा तु ) लक्षयित्वोपरिष्टात्तु ततोऽधस्ताच्च( B त्तु )लक्षयेत् ।
तत्र वक्ष्ये तिलकानां शुभानि चाशुभानि च ॥
ताम्रस्तु वर्णेन ( B ताम्रवर्णस्तु ) तिलको भवेच्च
शीर्षे समन्ताद्यदि संस्थितः स्यात् ।
सेनापतिस्तस्या भवेच्च भर्ता
स्तनस्य मध्ये प्रतिबिम्बमाहुः ॥

5 Mss यस्या- । 6 Ch[1] reads the first line as : "If between the brows there is a तिलकालक and on the neck a प्रतिबिम्ब" । 7 Tib reading is adopted here. Mss read the last *pāda* as : नाभेश्च मध्ये प्रतिबिम्बकं स्यात् । Tib adds after this गुह्ये तु यस्यास्तिलबिम्बकं स्यात्पञ्चैव तस्याः पतयो भवन्ति ।

गण्डस्य नासादिकमध्यदेशे
　　भवेच्च बिम्बं तिलकस्य यस्याः[1] ।
तां शोकभाजं प्रमदां वदन्ति[2]
　　रोमप्रदेशे[3] प्रतिबिम्बमाहुः[4] ॥
कर्णे तु यस्यास्तिलकालकः स्याद्
　　बहुश्रुतां तां प्रमदां वदन्ति ।
बहुश्रुतां तां श्रुतिधारिणीं[5] च
　　त्रिके[6] तु यस्याः प्रतिबिम्बकं स्यात्[7] ॥
[8]यस्योत्तरोष्ठे[9] तिलकालकः स्यात्तां भिन्नसत्यां प्रमदां वदन्ति ।
कृच्छ्रेण सा वै लभते हि वृत्ति[10]मूरौ[11] तु तस्यास्तिलबिम्बमाहुः ॥

1 Tib गण्डे तु यस्यास्तिलबिम्बकं स्याद् दुश्चारिणी सा स्वामिनं त्यजेद्धि । Ch[1] "If there is a तिलकालक on the cheek and a प्रतिबिम्ब on the back". 2-4 Ch[1] "She will remain a widow for many years and it will be very difficult for her to have a husband". 3 Mss रोमस्य देशे । 3-4 Tib reads : ऊरोस्तु निम्ने प्रतिबिम्बकं स्यात् ॥ 5 Tib पतिव्रता । 6 Tib पश्चे । Ch[1] कटिदेशे । 7 Ch[1] reads the verse as : "If on the ear there is a तिलकालक and a प्रतिबिम्ब on the hips then she will be बहुश्रुता and श्रुतिधारिणी" । Before the first verse the Mss add the following verses which are found neither in Tibetan nor in Chinese translations :

अक्षिभ्रुवोरन्तरतस्तु ( B श्च ) मध्ये सौभाग्ययुक्ता तु भवेच्च नारी ।
भर्तुः प्रिया सा स्वजने च भूयाद्भगोपरिष्टात्तिलकं तदाहुः ( Mss तमाहुः ) ॥
अक्षित्रिभागे तिलबिम्बकः स्यात्तां क्लेशभाजं प्रमदां वदन्ति ।
प्रभूतधान्यं धनसञ्चयं च भगस्य चोर्ध्वं तिलबिम्बमाहुः ॥
नसश्च ( Mss नास्यापि ) मध्ये तिलकालकः स्यात्तां देवकन्यां प्रमदां वदन्ति ।
स्याद ( Mss add हि )न्नपानं बहुकं समुच्छ्रितं
( B मूच्छितं, P मूर्च्छत् ) गुह्ये तु यस्यास्तिलबिम्बकः स्यात् ॥
गर्भे तु यस्यास्तिलकालकः स्यात्तां गण्डसे ( P स ) यां (?) प्रमदां वदन्ति ।
कृच्छ्रेण सा वै लभते हि वृत्तिं स्फिगन्तरे तु प्रतिबिम्बकं स्यात् ॥

8 Mss add : हनुप्रदेशे च भवेच्च यस्याः प्रभक्ष(P क्ष्य)णां तां सततं वदन्ति( P वाचन्ति ) ।
गावः सुता धान्यमथो हिरण्यं प्राप्नोति बिम्बं स्फिगमध्यभागे ॥

9 Mss यस्यान्तरो- । 10 Ch[1] omits this *pāda*. Tib दुश्चारिणी सा बहुदुःखभाक् स्यात् । 11 Ch[1] हस्ते ।

यस्याऽधरोष्ठे तिलकालकः[1] स्याद् दुश्चारिणीं तां प्रमदां वदन्ति ।
मिष्टा[2] न्नपानं बहु मृच्छते[3] सा तथा हि गुह्ये प्रतिबिम्बकं स्यात् ॥
चिबुके तु यस्यास्तिलकालकः[4] स्याद् दुश्चारिणीं तां प्रमदां वदन्ति[5] ।
मिष्टान्नपानं[6] बहु सा लभेत [7]गुह्ये द्वितीयं प्रतिबिम्बकं स्यात्[8] ॥

अयं भोः पुष्करसारिंस्तिलकाध्यायो नामाध्यायः ।

अथ खलु भोः पुष्करसारिन् [9]नक्षत्रजन्मगुणं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयतां। कथयतु भवान् त्रिशङ्को[10] ।

कृत्तिकासु नरो जातस्तेजस्वी[11] प्रियसाहसः[12] ।
भवेच्छूर[13]स्तथा चण्डः प्रियवादी[14] च मानवः[15] ॥

रोहिण्यां पुरुषो जातो धनवान् धार्मिकस्तथा ।
व्यवसायी[16] स्थिरः शूरो ध्रुवं चास्य सदा सुखं[17] ॥

1 Tib तिलकः or तिलबिम्बकं । 2 Tib omits मिष्ट । 3 Mss मूर्च्छते । Ch[1] "She will have no want of food". 4 Tib तिलकः । 5 Ch[1] omits this *pāda*. 6 Tib अन्नं च वस्त्रं । 7 Ch[1] "She will have plenty of food and no wants".

8 Mss add : गले तु यस्यास्तिलबिम्बकः स्यान्नित्यं ह्यलंकारपरा तु सा स्यात् ।
बह्वन्नपाना च बहुप्रजा च स्फिगेकदेशे प्रतिबिम्बमाहुः ॥
ग्रीवाप्रदेशे तिलकं तु यस्यास्तां दुःखभाजं सततं वदन्ति ।
हीनान्नपाना च ( P नेषु ) तथाऽसुता च
पृष्ठे तु तस्याः प्रतिबिम्बमाहुः ॥
सुगत्यर्थं समुद्दिष्टा ह्येते दुर्भिक्षलक्षणाः ।
सहजाश्च मनुष्याणां स्त्रीणां च तिलकाः स्मृताः ॥

9 Tib omits नक्षत्र । 10 Tib omits this sentence. Ch[1] omits all these four sentences. Ch[2] omits this chapter. 11 Tib ( Dege ) तपस्वी । 12 Tib ( Dege ) omits साहसः । 11-12 Tib ( Nar. ) तेजस्वी च तपस्वी च । 13 Tib ( Dege ) शूरः स्तेनः । 14 Tib ( Dege ) नीतिकारः । 13-15 Tib ( Nar. ) शूरश्च धीरश्च तथा सुखी च मानवः ॥ 16 B व्यवसायः, P -सायो । 17 Tib reads this *pāda* as : तथा चायं भवेत् सुखी ।

जातो मृगशिरे यस्तु मृदुः सौम्यस्तु मानवः।
दर्शनीयो भवेच्चासौ स्त्रीकान्तस्तु[1] विशेषतः॥

आर्द्राजातस्तु हिंसात्मा चण्डः परमजल्पकः[2]।
रौद्रकर्मा भवेच्चासावीश्वरश्च शतैर्महान्[3]॥

जातः पुनर्वसौ यस्तु ह्यलोलो बुद्धिमान्नरः।
धर्मशीलो भवेच्चासौ जातक्रोधश्च[4] मानवः॥

पुष्येण पुरुषो जातस्तेजस्वी ब्राह्मणो भवेत्।
क्षत्रियश्च भवेद्[5] राजा[6] वैश्यशूद्रौ च पूजितौ[7]॥

श्वसनः क्रोधनः क्रूरो[8] ह्यश्लेषासम्भवो नरः।
दुर्मनुष्यश्च[9] चण्डश्च[10] इति सर्वमिहादिशेत्॥

बहुप्रज्ञः श्राद्धकरो[11] बहुभाग्य[12]स्तथैव च।
धनवान् धान्यवान्[13] भोगी मघासु पुरुषो भवेत्॥

पूर्वफाल्गुनीजातस्तु यः कश्चित्पुरुषो भवेत्।
अधर्मबुद्धिशीलश्च गुरुदाराभिमर्दकः[14]॥

उत्तरायां तु फाल्गुन्यां जातो भवति भोगवान्।
दिव्यज्ञानश्च विज्ञाने[15] पुरुषः सुभगो[16] भवेत्॥

हस्ते जातश्च शुद्धात्मा विक्रान्तो मृदुभोजनः[17]।
सेनापत्यं च कुरुतेऽस्तेयकर्मा[18] भवेदसौ॥

चित्रासु जातश्चित्राक्षस्तथा चित्रकथाकरः।
दर्शनीयो बहुस्त्रीक[19]श्चित्रशीलो[20] भवेन्नरः॥

---

1 Tib स्त्रीरत-। 2 Tib परमयकरः। 3 Tib reads this *pāda* as : लभेच्चापि गृहं शुभं। 4 Tib मन्दोत्साह-। 5-6 Tib omits. 7 Tib क्षत्रियवैश्यशूद्राः पूजिताः। 8 Tib मन्दोत्साहः। 9 B omits च। 10 P omits च, Tib omits चण्डः। 11 Tib शुद्धकरः or शुद्धहस्तः। 12 Tib -पुण्य-। 13 Tib omits. 14 Tib सततं गुरुनिन्दकः। 15 Tib omits. 16 Tib पुण्यभाक्। 17 Tib (Nar.) सुखाद्यभोजी। 18 Tib ध्वंसकश्च। 19 Tib "mighty, powerful". 20 Tib शीलवान्।

स्वात्यां च पुरुषो जातो बन्धुश्लाघी[1] विचक्षणः ।
मृदुकः पानशौण्डश्च[2] मित्रकारी[3] विचारवान् ॥

विशाखासु नरो जातस्तेजस्वी द्रव्यवान् महान् ।
शूरो विक्रमवान्दक्षः[4] सुभगश्च[5] भवेदसौ ॥

अनुराधोद्भवो मर्त्यो मित्रवान् संग्रही[6] नरः ।
शुचिश्चैव कृतज्ञश्च धर्मात्मा च भवेच्च सः ॥

ज्येष्ठासु पुरुषो जातो मित्रवानभिजायते[7] ।
धनुर्वेदाभिरामश्च[8] नारीषु कुरुते मनः[9] ॥

मूलेषु पुरुषो जातोऽकृतज्ञः स्यादधार्मिकः ।
दृढो वीरो[10] भवेच्चासौ किल्विषी च स मानवः ॥

[11]आषाढासु च पूर्वासु मत्सरी चलितेन्द्रियः ।
[12]मत्स्यमांसप्रियश्चापि घातकः स्यात्स मानवः ॥

[13]सानुक्रोशश्च[14] दाता च विद्यानिष्ठः[15] सुहृज्जनः[16] ।
विश्व[17]दैवे नरो जातो भवेदपि च निश्चितः[18] ॥

[19]आचार्यः[20] शास्त्रकर्ता[21] च विश्वासी[22] च क्रियापरः ।
श्रवणे[22] जात[22] आयुष्मान् श्रीमांश्च[22] पुरुषो भवेत् ॥

अनवस्थितचित्तश्च चित्रद्रव्य[23]श्च मानवः ।
धनिष्ठासु भवेज्जातः पुरुषः सर्वशङ्कितः ॥

---

1 Tib मित्रवान् । 2 Tib महाभक्तिश्च । 3 Mss -रो । Tib "having great faith in friends." 4 Tib Nar. omits it. Dege त्यागी । 5 Tib महाभाग- । 6 Tib गृहवान् । 7 Tib मित्रभक्तोऽभिजयति । 8 Tib *'khor. gi. bstan. bcos. la. mkhas. śiṅ.* 9 B नरः । 10 Mss -ढवी- । 11 Mss आषाढासूत्तरपू- ( Tib आषाढासु च पूर्वासु ) । 12 Tib मत्स्यस्यमांस- । 13 Tib adds उत्तरायामाषाढायां । 14 Tib *spro. thuṅ* =अल्पोत्साहः । 15 Mss विदुनिष्ठ । Tib विचक्षणः । 16 Tib सुहृद्वान्, it adds : कुटुम्बबहुलो भवेत् । 17 Mss विश्वदे- । 18 Tib omits this line. 19 Tib adds : श्रवणे जातः । 20 Tib omits it. 21 Tib ( Nar. ) -निपुणः । 22 Tib omits. B -श्वास्यः । 23 Tib *lit.* बहुधनः ।

वारुणे यदि नक्षत्रे जातो भवति मानवः ।
परुषो[1] द्वेषशीलश्च[2] परिवादी[3] च सर्वशः ॥

जातो भाद्रपदायां तु पूर्वस्यामिह मानवः ।
चारित्रगुणयुक्तश्च कृतज्ञो मुखर[4] स्तथा ॥

उत्तरस्यां नरो जातो भविष्यति[5] विचक्षणः ।
मेधावी बह्वपत्यश्च धर्मशीलो महाधनः ॥

रेवत्यां पुरुषो जातो धर्मात्मा[6] ज्ञातिसेवकः[7] ।
दरिद्रोऽल्पधनो नित्यं दायको नानुसूयकः[8] ॥

अश्विन्यां पुरुषो जातो भवत्यतिविचक्षणः[9] ।
महाजनप्रियश्चापि शूरश्च सुभगश्च सः ॥

भरण्यां पुरुषो जातः पापाचारोऽविचक्षणः ।
कन्दर्प[10] दातुकामश्च[11] परतश्चोपजीवकः ॥

अयं भोः पुष्करसारिन्नक्षत्र[12]जन्मगुणो नामाध्यायः ।

पठ भोस्त्रिशङ्को उत्पातचक्रं नामाध्यायं[13] । कथयति च[14] ।

1 Mss पु- । 2 Tib शीलहीन- । 3 Tib *byi. rgyug. par. 'gyur.* 4 Tib *kha. ra. bar. 'gyur.* 5 Tib भवत्यति- । 6 Tib धर्मज्ञः । 7 Tib ज्ञानसेवकः । 8 Tib ( दायकश्च ) प्रियो भवेत् । 9 Tib omits अति । 10 B -र्पौ । P -र्प्यौ । Tib *sdar.* (*sdaṅ ?*) *shiṅ* -मत्सरः ? 11 Tib दानरतश्च । 12 Tib omits नक्षत्र । 13-14 Tib omits these sentences. 14 P कथयातु ( -यति ? ) भगवान् । Chinese translations omit this chapter.

# उत्पातचक्रनिर्देशः[1]

अष्टाविंशतिपर्यन्तकृत्स्ने नक्षत्रमण्डले ।
दिव्या विकारा दृश्यन्ते सूर्यचन्द्रग्रहादिषु ॥
माघस्य प्रथमे पक्षे शैलो वा पार्थिवो यदि ।
धूमवृष्टिर्हि आदित्ये उदयति प्रदृश्यते ।
विद्युतो वाथ दृश्यन्ते तदा विद्याज्जनक्षयं ॥
अश्विन्यामर्कतो धूमो निर्गच्छन्नपि छादयेत् ।
अनावृष्टिं तदा विद्यात्पूर्णवर्षाणि द्वादश ॥
भरण्यां माघमासे तु पीतसूर्योऽथ दृश्यते ।
समन्ताद्वध्यते राष्ट्रं मध्ये दुर्भिक्षमादिशेत् ॥
फाल्गुने कृत्तिकायां तु आदित्ये परिखो यदि ।
नश्यन्ति कर्वटा[2] स्तत्र यदि देवो न वर्षति ॥
चैत्रमासे यदा पुष्ये सूर्ये कृष्णं प्रदृश्यते ।
अचिरोदयकाले तु क्षितिपालोऽवरुध्यते ॥
वैशाखमासे[3] चार्द्रायामादित्यः प्रतिसूर्यकः ।
संग्रामं तत्र जानीयादुभौ घात्येते[4] पार्थिवौ ॥
गृह्येतां चन्द्रसूर्यौ वा ज्यैष्ठे भरणिज्येष्ठयोः ।
सामात्यो वध्यते राजा[5] राष्ट्रे दुर्भिक्षमादिशेत् ॥
आषाढे च यदादित्ये पूर्वभाद्रपदे स्थिते ।
सायाह्ने दृश्यतेऽत्यर्थं लोहितो मण्डले व्रणः ॥
परचक्रेण तद्राष्ट्रं षण्मासान् पीड्यते तदा ।
क्षितिपालश्च सामात्यः पुत्रदारेण वध्यते ॥
पूर्वायां चोत्तराषाढायामाषाढे गृह्यते शशी ।
विद्याद् दुर्भिक्षकलह[6] रोगांश्चात्र विनिर्दिशेत् ॥
मासेऽथ श्रावणे मूले चन्द्रसूर्यौ न भासतः ।
स्फुलिङ्गाश्चात्र दृश्यन्ते विद्याद्रोग[7] भयं महत् ॥

---

1 Translations omit this and the following chapters. 2 Mss कर्पटा
3 P -शाखे तु । 4 Mss -त । 5 P omits. 6 Mss -हो । 7 P -गं ।

मासेऽश्व[1] युजि[2] गृह्येतां[3] एकपक्षेन्दुभास्करौ ।
राजपुत्रसहस्राणां तदा जायेत संक्षयः ॥
अलक्षणो निःप्रकाशः पूर्णमास्यां तु कार्त्तिके ।
चन्द्रसूर्याविग्निवर्णौ रक्तवर्णे नभस्तले ॥
रविवद्भाति तद्राष्ट्रं विनश्येत पुनः पुनः ।
राज्ञां विद्याद्धतानां वै भूमिः पास्यति शोणितं ॥
भरण्यां माघमासे तु कृष्णो वायुः समुत्थितः ।
छादयेच्चन्द्रसूर्यौ[4] तु[5] शीघ्रं राष्ट्रं विनश्यति ॥
मासे तु फाल्गुने वायुः पांशुवर्षं सविद्युतं ।
वध्यन्ते पूर्वराजानः प्रतिष्ठन्ते तथापरे ॥
सहादित्येन चन्द्रेऽथ यदा कश्चिद् ग्रहश्चरेत् ।
वायुर्वा विषमो वाति विद्याद्राजवधं तदा ॥
अशन्युल्के[6] तु वैशाखे आदित्येन सहोत्थिते ।
षण्मासाभ्यन्तरेणाथ राष्ट्रे व्यसनमादिशेत् ॥
ज्येष्ठमासे यदादित्यो ग्रहतो निर्गतो भवेत् ।
आदित्यस्योपघातेन ग्रहाः सर्वेऽथ पीडिताः ॥
ज्येष्ठे [7]च पांशुर्वर्षेत आदित्यः परिविष्यते[8] ।
क्षितिपालसहस्राणामेक एक[9] स्तु वध्यते ॥
आषाढे वायवो वान्ति गच्छन्तो भरणीस्थिताः ।
उदपानानि शुष्यन्ते सर्वशस्यं च शुष्यति ॥
श्रावणे वायवः पीताः सदा कृष्णं नभस्तलं ।
भयं तत्र विजानीयात्समन्तात्[10] समुपस्थितं ॥
श्रावणे वर्षते ह्यग्निः पूर्वभाद्रपदे दिवा ।
मेघाः शब्दमुत्कुर्वन्ति रोगदुर्भिक्षमादिशेत् ॥

1 B चाश्व- । P -थाश्व- । 2 Mss -जे । 3 Mss -द् । 4 P omits सूर्यौ । 5 P omits. 6 Mss -ल्काथ । 7 P ज्येष्ठे पांशु । 8 B -वेषते । P -वेष्यते । 9 P omits. 10 P -क्षात् ।

यदा भाद्रपदे मासे नभः स्याच्छन्नगर्जितं[1] ।
परचक्रं तदा राष्ट्रं हरते धनसञ्चयं ॥
अश्वयुजि वातवृष्टिः स्यादागत्यो[2] त्तरां दिशं ।
पातयेच्चैवमाघातं कृत्स्नं राष्ट्रं विनश्यति ॥
कार्त्तिके[3] शुक्लत्रयोदश्यां यदा चन्द्रे[4] धनुर्भवेत् ।
समन्तान्नश्यते राष्ट्रं मध्ये[5] दुर्भिक्षमादिशेत् ॥
उल्कापाता ह्यशनयो माघमासे[6] भवन्ति वा ।
अश्विन्यां विषये तत्र प्रजाऽश्वासेन वध्यते ॥
मासे तु फाल्गुने यत्र अग्निवर्षं नभस्तलात् ।
भवेच्छब्दस्तदाकाशे तद्राष्ट्रं नश्यते लघु ॥
स्वात्यां चैत्रे यदा वर्षं निरुद्धं वातवर्षितं ।
दृश्यतेन्द्रधनुः क्षिप्रं नगरं तद् विनश्यति ॥
भरण्यां ज्येष्ठमासे तु शब्द उत्तरतो भवेत् ।
पीतवर्णं तदाकाशं परचक्रभयं भवेत् ॥
आषाढे मासि पुष्येऽथ दृश्यन्ते व्योम्नि विद्युतः ।
सतृणोदकवृष्टिभिस्त्रिभागं मुच्यते[7] प्रजा ॥
श्रावणे तु यदा मूले बहु देवः प्रवर्षति ।
दृश्यतेन्द्रधनुस्तत्र क्षत्रियाणां महद्भयं ॥
मासे भाद्रपदे यत्र निर्घातः पतति क्षितौ ।
सुकृच्छ्रा वायवो वान्ति महद्रोगभयं तदा ॥
मासे भाद्रपदे पुष्ये विदिग्भ्यो निश्चरेद् ध्वनिः ।
क्षत्रियः कुप्यते क्षिप्रं विपक्षा तु तदा[8] प्रजा ॥
भरण्यामश्वयुजे[9] शब्द उपरिष्टाद्भवेद्यदि ।
सतृणं चोत्सृजेत्पांशुं[10] तापसानां महद्भयं ॥
कार्त्तिके तु यदार्द्रायां शब्दः श्रूयेत[11] भैरवः ।
चतुष्पदः कार्षकाणां[12] मृत्युं तत्र विनिर्दिशेत् ॥

1 P -र्जते । 2 Mss -त्यु- । 3 B -क- । 4 P -न्द्र- । 5 P गन्धे । 6 B माघे मासे । 7 Mss मुच्चते । 8 Mss -भूत्तदा । 9 B -युजि । 10 Mss पांशु । 11 Mss -यते, -ति । 12 P -काश्च । B -र्षिकाश्च ।

मार्गशीर्षे धनिष्ठायां तूर्यशब्दोऽम्बरे भवेत् ।
वातातुरस्तदा राष्ट्रे व्याधिर्भवति दारुणः ॥
पौषमासे यदा स्वात्यां शब्दो भवति भैरवः ।
अभीक्ष्णं विद्युदाकाशे पण्डितानां महद्भयं ॥
माघे शुक्ले तु निर्घातो नित्यं शाम्येद्[1] वसुन्धरां ।
जानीयात्तृतीये वर्षे सकलं राष्ट्रविभ्रमं ॥
ज्येष्ठायां फाल्गुने मासे कृष्णवायुः समाकुलः ।
अभीक्ष्णं कम्पते भूमिर्ह्यचारिभयं तदा ॥
पूर्वभाद्रपदायां तु चैत्रे कम्पेत्क्षिति[2] दिवा[3] ।
तस्मिन् वर्षे च [4]तद्राष्ट्रे परसैन्यान्महद्भयं ॥
पूर्वायां चेदाषाढायां रात्रौ चैत्रे च निश्चलेत् ।
असिभिर्हन्यते[5] राजा हन्यते च महाजनः ॥
वैशाखे कम्पिता भूमिः कृष्णपक्षे ह्यभीक्ष्णशः ।
अनावृष्ट्या तु दुर्भिक्षं मासान् षट् तत्र निर्दिशेत् ॥
ज्येष्ठे मासे भरण्यां तु दिवा कम्पेद्वसुन्धरा ।
विद्याद्योधसहस्राणां मही पास्यति शोणितं ॥
ज्येष्ठे मासे यदा मूले रात्रौ भूमिः प्रकम्पते ।
प्रत्यन्तो वध्यते राजा राष्ट्रे बलिं[6] समादिशेत् ॥
आषाढे कम्पते भूमिः पुष्य[7] नक्षत्रसंस्थिते ।
शस्यं विनश्यते तत्र [8]कलिकर्म च जायते ॥
प्रकम्पन्ते[9] यदा चैत्या[10] आर्द्रायां वा मघासु वा ।
ज्वलेयुः प्रपतेयुर्वा नश्येद्राष्ट्रं[11] तदा लघु ॥
चैत्या[12] यत्र प्रकम्पन्ते[13] हसन्ति च नमन्ति च ।
सराष्ट्रः क्षितिपस्तत्र न चिरान्नाशमर्च्छति ॥

---

1 P सांस्ये । B साम्ये । 2 Mss कम्पाक्षि- । 3 B यंदा । 4 Mss य- । 5 P अमा हनते । B अमीभिर्हरते । 6 P -लिमादि- । 7 P -ष्ये । 8 Mss बलि- । 9 Mss -ते । 10 Mss चैत्र्यामा- । 11 P राष्ट्रं नश्यते । 12 Mss चैत्र्यां । 13 P -म्पेच्च । B -म्पेत ।

श्रावणे कम्पते भूमिः पूर्वभाद्रपदास्थिते ।
सदा पराजितो राजा चौरैराष्ट्रे च वध्यते ॥
कार्त्तिके क्षितिकम्पेन यदा चैत्यं विशीर्यते ।
द्वारं वा नगरस्याथ भूयिष्ठं नश्यते प्रजा ॥
वामे वा दक्षिणे चेन्दोः शृङ्गे तिष्ठेद् बृहस्पतिः ।
महाभोगा विनश्येयुः प्रकाशाः पृथिवीश्वराः ॥
सूर्याचन्द्रमसोः शृङ्गे लोहिताङ्गो यदाऽरुहेत् ।
क्रूराक्षमन्त्रिकात्पीडां[1] प्रत्यन्तानां विनिर्दिशेत् ॥
शनैश्चरो यदा शृङ्गे सोमस्याभिरुहेत्तदा[2] ।
ज्ञेयं रोगभयं[3] घोरं दुर्भिक्षं चात्र निर्दिशेत् ॥
राहुणा निगृहीतस्तु चोल्कया हन्यते शशी ।
षण्मासाभ्यन्तरात्तत्र राज्ञो व्यसनमादिशेत् ॥
यस्य चैवाथ नक्षत्रे शशी सूर्यो[4] विगृह्यते ।
राहुणा क्षितिपो राज्यैः सह पीडामवाप्नुयात् ॥
राज्ञो वै चाथ नक्षत्रे चन्द्रं[5] केतुर्यदा विशेत् ।
प्रत्यन्तराजभिः सार्धं शस्त्रमूर्च्छां विनिर्दिशेत् ॥
चन्द्रमध्यगतः शुक्रः फाल्गुन्याथ मघा यदा ।
सर्वधान्यानि शुष्येयुस्तदा रोगं विनिर्दिशेत् ॥
बृहस्पतिश्च शुक्रश्च लोहिताङ्गः शनैश्चरः ।
लिख्यन्ति सोमशृङ्गस्य तदा विद्यान्महद्भयं ॥
धूमकेतुर्महाभागः पुष्यमारुह्य तिष्ठति ।
चतुर्दिशं तदा विद्यात्परचक्रैः पराभवं ॥
मघायां लोहिताङ्गो वा श्रवणे वा बृहस्पतिः ।
तिष्ठेत्संवत्सरत्रीणि भयं विद्यात्समागतं ॥
तिष्ठेच्छुक्रोऽथ रोहिण्यां ज्येष्ठे मासे कथंचन ।
व्याकुर्यान्नियतमत्र[6] क्षत्रियाणां महद्भयं ॥

1 Mss -डा । 2 Mss यदा । 3 P omits. 4 B शशिसूर्यौ तु गृ- । P शिसूर्यौ । 5 B -न्द्रः । 6 P -न्नियतं तत्र क्षे- ।

विशाखायां समीपस्थौ बृहस्पतिशनैश्चरौ ।
सोमो वा रविणा सार्धं परचक्रभयं तदा ॥
काकाः श्येनाश्च गृध्राश्च वसेयुः सहिता मुदा ।
मैथुनं वारितं वेयुः[1] परैः सह रणस्तदा ॥
श्येनो हस्तिनिवासे वा अभिरोहेत्पुनः पुनः ।
परचक्रेण युद्धं तु भवेच्चापि पुनः पुनः ॥
कन्या प्रसूयते यत्र चतुर्हस्ता चतुस्तनी ।
स्त्रीणामेव भवेत्तत्र मरणं ह्यतिदारुणं[2] ॥
गर्भस्था दारका यत्र हसन्ति च वदन्ति च ।
तस्य देशस्य जानीयाद्विनाशं समुपस्थितं ॥
एकपादां[3] स्त्रिपादांश्च[4] चतुरङ्गां[5] स्तथैव च ।
नार्यो यत्र प्रसूयन्ते राज्ञो व्यसनमादिशेत् ॥
सूयन्ते विकृतान्गर्भान्सन्तानान्[6] भयव्यञ्जनान् ।
प्रमदा यत्र देशे तु राजा तत्र विनश्यति ॥
लघुहस्तशीर्षमुखान् मानुषं कायमाश्रितान् ।
प्रमदा यत्र सूयन्ते राष्ट्रं तत्र विनश्यति ॥
खराश्च महिषाश्चापि पशवोऽथ तथाविधाः ।
द्वित्रिशीर्षाः[7] प्रसूयन्ते देशे यत्र[8] स नश्यति ॥
शृगालश्वानमकरहयरूपाश्च मानवाः ।
जायन्ते यत्र देशे तु स देशो लघु नश्यति ॥
पादावुभौ यदा वैश्या गुर्विणी संप्रसूयते ।
देशस्य विलयं ब्रूयात्परचक्रेण दारुणं ॥
पूर्वार्धः[9] पक्षिनरयोर्गर्भो यत्र प्रसूयते ।
राजा वा राजामात्यो वा सह देशेन नश्यति ॥

---

1 Mss वापुः, -युः । 2 P omits. 3 Mss दा- । 4 B दा- । P omits it. 5 Mss -ङ्गा- । 6 B सनानोभ- । P समानोभ- । 7 P -र्षोऽथ । 8 Mss तत्र । 9 Mss -र्धप- ।

कुम्भाण्डो[1] जायते यत्र द्विमुखोऽथ चतुर्मुखः ।
त्रिनेत्रस्त्रिमुखो वापि विद्यात्तत्र महद्भयं ॥
सौकरेण तु वक्त्रेण शरीरं मानुषं यदि ।
[2]सूतं चतुर्दिशं राष्ट्रं हन्यात्तत्र न संशयः ॥
आदित्यस्य तु रूपेण मानुषो यत्र जायते ।
विभ्रमात्सकलं राष्ट्रं विनाशमुपगच्छति ॥
उत्तानशायी बालस्तु देशे यत्र द्विजोत्तमः ।
[3]दृष्टः प्रव्याहरन् वेदान् क्षिप्रं देशो विनश्यति ॥
कुक्षिं भित्त्वा[4] यदा बालो गर्भान्निष्क्रमते स्वयं ।
अत्राणां मातरं कृत्वा स देशो नश्यते लघु ॥
गर्भस्थाः सूकरा उग्राः सर्पाश्च शकुनि[5] स्तथा ।
स्त्रीणां गर्भा[6] त्प्रसूयन्ते[7] देशे[8] तु भय[9] मादिशेत्॥
पौरुषं गार्दभं चाथ[10] सौकरं चार्धविग्रहं[11] ।
गावो यत्र प्रसूयन्ते निर्दिशेद्भयमागतं ॥
नारी गृह्णाति गर्भं वा अदृष्ट[12] स्तनरूपिणी ।
विनाशं तस्य देशस्य सनृपस्य विनिर्दिशेत् ॥
जटी दीर्घनखो यत्र [13]सुकृष्णः परुषच्छविः ।
स[14]जनो [15]जायते यत्र राष्ट्रं साधिपतिं दहेत् ॥
अग्रीवा दन्तसहिता जायन्ते यत्र बालकाः ।
शुष्येत सकलं शस्यं जनश्च विलयं व्रजेत् ॥
एकबाहुरशीर्षोऽथ गर्भो यत्र प्रसूयते ।
स्वयं क्षुभ्येत तद्राष्ट्रं विनश्येत न संशयः ॥
फले फलं यदा पश्येत्पुष्पे वा पुष्पमाश्रितं ।
गर्भाः स्रवेयुर्नारीणां युवराजश्च वध्यते ॥

---

1 =कुष्माण्डो । 2 Mss सूयात । 3 Mss -श्यन्प्रव्या- । 4 P हित्वा । 5 Mss -नी- । 6 B -र्भाः प्र- । 7 P omits न्ते । 8-9 P omits. 10-11 P omits. 12 Mss -ष्टं । 13 Mss स- । 14 Mss सव्यंज- । सव्यजनो ? 15 Mss यत्र जा- ।

अकाले पादपा यत्र पुष्प्यन्ति च फलन्ति च ।
लता गुल्मोऽथ वल्ली वा देशे तत्र भयं भवेत् ॥
वृक्षोपरिष्टात्पश्येद्वा स्रवन्तमात्मशोणितम् ।
कूजमानं पतङ्गं[1] वा तदा विद्यान्महद्भयं ॥
वृक्षाणां मण्डपानां वा छाया न परिवर्तते ।
चतुर्वर्णभयं तत्र कलिकर्म[2] च जायते ॥
पुष्प्येयुः पादपा यत्र विविधाः पुष्पजातयः ।
कल्पवृक्षप्रकृतयस्ततो विद्यान्महद्भयं ॥
अनावर्तं यदा पुष्पं फलं चापि प्रदृश्यते ।
विनाशं तस्य देशस्य दुर्भिक्षं कलहं वदेत् ॥
स्थानास्थानं गता वृक्षा दृश्येयुर्यत्र कुत्रचित् ।
पूर्वप्रतिष्ठिता राजा न चिरेण विचाल्यते ॥
दैवासुरं[3] च संग्रामं पश्येदद्भुतदर्शनं ।
शस्त्रं मूर्च्छयते[4] तत्र तस्करै[5] श्चापि पूर्ववत् ॥
कम्पते रुदते शास्ता गच्छन्वा यत्र दृश्यते ।
परचक्रा[6] त्तदा विद्यादत्यर्थं तत्पराजयं ॥
दैवता यत्र देशे तु नृत्यन्ति च हसन्ति च ।
अश्रूणि पातयेयुर्वा तदा विद्यान्महद्भयं ॥
दैवता यत्र क्रीडन्ति ज्वलन्ति निमिषन्ति वा ।
चलेयुरथवा यत्र क्षितिपोऽन्यो भवेत्तदा ॥
शिवलिङ्गं यदा कम्पेद्गगने वाथ दृश्यते ।
निमज्जते धरण्यां वा ध्रुवं राजवधो भवेत् ॥
प्रतिमाः परिवर्तन्ते धूमायन्ते रुदन्ति च ।
प्रस्विद्येयुः प्रधावेयुरन्यो राजा भविष्यति ॥
अचलो वा चलेत्स्थानाच्चलं वाप्यचलं भवेत् ।
अमात्यो[7] हन्ति राजानं कलहं चात्र निर्दिशेत् ॥

1 Mss पतन्तं । 2 P बलि- । 3 Mss देवा- । 4 Mss -च्छीय- । 5 B तस्तरै । P स्तरै । 6 Mss -क्रे त- । 7 Mss -त्या ।

वमन्ति रुधिरं कन्या नमन्ते वा दिशो दश।
अयुक्ता वा प्रवर्तन्ते क्षत्रियाणां महद्भयं॥
वर्षते कुसुमं यत्र रक्तबिन्दुमथापि वा।
प्राणिनो विविधान्वापि विद्याच्चौरभयं तदा॥
यूपाः पुराणा निगमा देवागाराणि चैतियाः[1]।
नगराण्यथ धूम्यन्ते[2] क्षिप्रं राजा विनश्यति॥
इन्दुर्वा[3] दीपवृक्षो वा दीपो यत्र न दीप्यते।
राज्यकामः कुमारो वा क्षुभ्येद्विटपको[4] ऽपि वा॥
अन्तःपुरे यदा नीडं कुर्वते मधुमक्षिकाः।
अस्त्र[5] वापि गृहं दह्याद्[6] राज्ञो व्यसनमादिशेत्॥
पतेदन्तःपुरे विद्युद् वृक्षे वाप्याश्रमे तथा।
पुरि[7] चैत्यच्छायायां [8]वा राजार्थे[9] पतिता हि सा॥
प्राकारे वाऽयुधागारे[10] गोपुरास्थानकेषु[11] वा।
वायसः कुरुते नीडं सामात्यो[12] ध्वंसते नृपः॥
अनाहतेभ्यस्तूर्येभ्यः स्वयं शब्दो विनिश्चरेत्।
स्वचक्रक्षोभदोषेण सर्वं[13] राष्ट्रं विलुप्यते॥
मांसशोणितवर्षं वा पत्रपुष्पफलानि वा।
यदाभिवर्षेत्तद्वर्षं चक्रे[14] राष्ट्रं विलुप्यते॥
मधुफाणितपुष्पाणि गन्धवर्षाण्यथापि वा।
दिशो दाहाश्च दृश्येयुर्मारदुर्भिक्षलक्षणं॥
मेघः समन्ततो गर्जेदुपवर्षेत्सचातकं।
शोणितं सकरकं स्यात्तदा विद्यात्पराद्भयं॥
विद्युच्च पतते घोरा करकाणां[15] च वर्षणं।
गन्धर्वनगरं चाथ दृष्ट्वा विद्यान्महद्भयं॥

---

1 चैतिकाः? 2 Mss -न्ति। 3 Mss -न्द्रो वा। 4 Mss -विको-। 5 Mss अश्रुर्वा। 6 Mss दह्येद्। 7 Mss पुरा। 8 Mss omit वा। 9 B -र्थो। 10 P omits this word. 11 Mss -स्तालकेषु। 12 Mss -न्यो। 13 Mss सकलं। 14 Mss -क्रे। 15 कनकानां।

शशी शोणितसंकाशो मध्ये कृष्णो विवर्णवान्।
सामन्तकेन पीड्यते विद्याद्राष्ट्रे महद्भयं॥
प्रदीपिताग्निसंकाशो यदा दृश्येत चन्द्रमाः।
गगनं दह्यते तत्र लोक[1] पीडा ज्वरेण[2] च॥
यदा गैरिकसंकाशः[3] क्षिप्रमेवोपशाम्यति।
वर्षणस्यागमो विद्याद्यदि वायुः प्रवायते॥
सन्ध्यायां धूम्रवर्णायां दृश्येतेन्दुश्च[4] भास्करः[5]।
विच्छिन्नो ब्रह्मरूपेण वर्षं तत्र विनिर्दिशेद्॥
नाप्सु मज्जति नाप्यग्नौ पूर्ववच्च न दृश्यते।
अग्निरुत्पत्स्यते तत्र कोष्ठागारं दहेत सः॥
ध्वजाग्रे वायसो यत्र लम्बपक्षो विधावते।
उदकं संहरेत्क्षिप्रमग्नितः[6] सुमहद्भयं॥
जलं जाज्वल्यमानं तु मत्स्यो निर्दहति स्वयं।
अनावृष्टिं तदा ब्रूयाद् दुर्भिक्षं च महद्भयं॥
पुरद्वारे यदागच्छेत्स्वयमारण्यको मृगः।
चक्रद्वयेऽपि दुर्भिक्षं राष्ट्रे रोगं च निर्दिशेत्॥
त्रिशीर्षः पञ्चशीर्षो वा यदा सर्पोऽथ दृश्यते।
अनावृष्ट्या तदा विद्यात्सर्वशस्यं विनश्यति॥
कुशूलो यत्र दृश्येत कम्पयन् तु वसुन्धरां।
कोष्ठागाराणि नश्येयुर्ये चान्ये धनसञ्चयाः॥
सर्प उद्यतशीर्षस्तु युध्यते पुरुषैः सह।
चक्रद्वयाद्रोगतश्च विद्यात्तत्र महद्भयं॥
बिल एकत्र बहवः सर्पाः सुपरिवेष्टिताः।
शस्त्रमृत्युं तदा विद्यात् क्षत्रियाणां महद्भयं॥
निश्चरन्त्यवधानेन[7] खड्गाः प्रज्वलिता यदा।
ततस्तं न चिरात्पश्ये[8] त्संग्रामं प्रत्युपस्थितं॥

1 Mss -कं। 2 B पीड्येज्। P -डा ज्वलेन च। 3 Mss -शं। 4 B -दिन्दुं च। P -दिन्दुमथ
5 Mss -स्करं। -स्वरः? 6 Mss -तोऽवसुम-। 7 Mss -नेशः। 8 P पश्येन्न चिरात्।

काकः श्येनश्च गृध्रो वा यस्य नीयेत मूर्धनि ।
षण्मासाभ्यन्तरे राजा म्रियते सपुरोहितः ॥
प्रासादाश्च प्रकम्पन्ते शरणानि गृहाणि च ।
महाबलं च वध्येत राष्ट्रस्य राजपालकः ॥
वज्रोद्धृता[1] दिशः सर्वाः कृष्णपक्षे चतुर्दिशं ।
वर्षेयुः शोणितं यत्र क्षितिपालोऽत्र वध्यते ॥
सूर्यस्योदयकाले तु महोल्का निपतेद्यदा ।
राजपुत्रसहस्राणां भूमिः पास्यति शोणितं ॥
वृक्षाः सर्पाः[2] प्रकम्पेयुर्मुच्येयुस्त्वचो[3] वा तथा ।
सर्वस्मिन्नेव राष्ट्रे तु विद्याच्छत्रुभयं महत्[4] ॥
दिने ह्युल्काप्रयुक्तिर्वा ज्वलन्ती यदि दृश्यते ।
रक्तोत्पादं तदा विद्यात्संग्रामं भीमदर्शनं ॥
असिं प्रज्वलितं पश्येत्तोमरं चक्रमेव च ।
विद्यात्पश्यन्ति शस्त्राणि संग्रामं भीमदर्शनं ॥
दीर्घमुच्छ्वसते वाऽश्वः [5]अश्रूणि च निपातयेत् ।
पादेन कर्षते शीघ्रं युद्धे राजवधो ध्रुवं ॥
काकश्चेद् गृहमारुह्य हा पुत्र इति वाशति ।
सर्वः प्रणश्यते देशो नगरग्रामकर्वटः[6] ॥
अनग्नौ जायते धूमः स्थले पद्मानि वा यदा ।
विनाशं तस्य देशस्य नियमाच्छीघ्र[7] मादिशेत् ॥
आरवन्ति यदा घोरं मेघा वृकमृगास्तथा ।
विनाशं तस्य देशस्य विद्याच्छीघ्रमुपस्थितं ॥
छिन्नस्रोता भवेन्नद्यश्चिरकालवहा अपि ।
गृहाः शून्योदकेनापि शुष्कास्तत्र भयं भवेत्[8] ॥
प्रतिस्रोता[9] यदा नद्यो वहन्त्यप्रतिवारिताः ।
नित्योद्विग्ना जनपदा निर्दिशेच्च जनक्षयं ॥

1 B -हृता । 2 वृक्षाः सर्वे ? वृक्षे सर्पाः ? 3 B र्ने च वा । P omits. 4 Mss -च्छत्रुमहद्भयं । 5 Mss वाश्वो अ- । 6 B -र्पटः । 7 Mss -घ्रनिर्दिशेत् । 8 Mss वदेत् । 9 B -श्रोत्र । P -श्रोत्रं ।

धनूंष्याकृष्यमाणानि धूमायन्ति ज्वलन्ति च ।
अन्यद्वापि प्रहरणं परेभ्यो जायते भयं ॥
मयूरग्रीव[1] संकाशः परिवेशो निशाकरे ।
विद्याद्राजसहस्राणां मही पास्यति शोणितं ॥
नराणां प्रमदानां च रतिहर्षो न जायते ।
सर्वत्र शोकचिन्ता वा महत्तत्र भयं भवेत् ॥
निर्ग्रन्था ऋषयः[2] सन्तो देशान्प्रक्रमेयुर्यतः[3] ।
नदीं भित्वा निकुञ्जान्वा[4] स देशो नश्यतेऽचिरात् ॥
यत्रौषध्यश्च विरसा जलं[5] च परिहीयते ।
विद्याद्देशं तमुत्सृष्टं देवता-ऋषिसाधुभिः ॥
मत्स्याः कूर्माश्च सर्पाश्च म्रियन्ते यत्र [6]जाङ्गलाः ।
धनस्कन्धः स्त्रिया[7] स्तत्र सपत्नैर्वि [8]प्रलोप्स्यते ॥
अपूर्वाः पक्षिणो यत्र स्थले वारिणि[9] एव वा ।
दृश्येयुः परचक्रेण धनस्कन्धो विलोप्स्यते ॥
महापथो यदा कक्षैः प्रसृतैरपथो[10] भवेत् ।
सग्रामकर्वटं राष्ट्रं पुत्रेण सह नश्यति ॥

नानोत्पातचक्रनिर्देशो नामाध्यायः ।

पठ भोस्त्रिशङ्को पुरुषपिन्याध्यायं । अथ किं । कथयतु भगवान् ।

अथ खलु भोः पुष्करसारिन् पुरुषपिन्याध्यायं व्याख्यामि तच्छ्रूयतां । कथयतु भगवान् ।

अष्टाविंशतिः[11] पुष्करसारिन्नक्षत्राणि प्रकीर्तितानि । यानि चन्द्रसूर्यनिःसृतान्यनुवहन्ति । तत्र सुकुगृष्ट्या[12] अष्टाङ्गुलप्रमाणया द्वादशाक्षगृष्ट्यः स्वशरीरं

---

1 P ग्रीवा । 2 P महर्षयः । 3 Mss देशाविप्रक्रमेद्यतः । 4 Mss -द्दा । 5 B -नं ( नश्च ? ) । 6 Mss जङ्गलाः । 7 Mss -यस्त- । 8 B -त्नैर्यत्र लो- । P -त्नैर्विप्रला- । 9 P -णि यदा । 10 P न पथो । 11 Mss -शतीमे । 12 Mss स्वकुगृष्ट्यो ।

दैर्घ्येण[1] ज्ञातव्यं । एकाक्षगृष्टिः शीर्षमूर्ध्नि[2] एकपादतलं भवेत्[3] । चतुर्दश[4] गृष्ट्यो नक्षत्राणां पदं यत्र संदृश्यते । तदन्यथा न भवति । नक्षत्रे यत्र यो जातस्तत्र तत्र संदृश्यते[5] ।

## पुरुषपिन्यः

कृत्तिकायां हि[6] जातस्य मुखे वै[6] चतुरङ्गुलः ।
पिन्यो दक्षिणतो यस्य[7] लोमशः कृष्णलोहितः ॥
भोगवान् यशसा युक्तः पण्डितो ज्वलति श्रिया ।
कृत्तिकास्वथ जातस्य भवत्येतद्धि लक्षणं[8] ॥
दृश्यते व्रण एवायं यस्य वै चतुरङ्गुलः[9] ।
रोहिण्यां जातकः सोऽपि[10] विद्वान् धर्मरतः सदा ॥
मण्डितो भोगसम्पन्नो ह्रीयुक्तश्चापि सर्वतः ।
शूरो विजयसम्पन्नो नित्यं शत्रुप्रमर्दकः ॥
ग्रीवायामर्धगृष्ट्या[11] तु दाहो [12] यस्य प्रदृश्यते ।
मृगशीर्षे ह्यसौ जातः शूरो भोगसमर्पितः ॥
अर्धद्वितीय[11]गृष्ट्या तु पिन्यो वामे हि यस्य तु ।
आर्द्रायां क्रोधनो जातो मूर्खो गोपतिकश्च सः ॥
वामे कक्षे व्रणो यस्य कृष्णश्चैव पुनर्वसौ ।
धनधान्यसमृद्धो हि जायते स्वल्पमेधसः[13] ॥
तथैव पुष्ये[14] जातोऽसौ[15] दृश्यते वरलक्षणः ।
चक्रमध्ये च[16] हस्ते च[17] सूर्यश्चन्द्रो विराजते ॥

---

1 B दीर्घेण । 2 P -र्द्धिमेक- । 3 तत्र स्वकमुष्ट्या अष्टाङ्गुलप्रमाणया द्वादशार्द्धमुष्टयः स्वशरीरं दर्घ्येण ज्ञातव्यं । एकार्धमुष्टिः शीर्षमूर्ध्नि एकपादतलं भवेत् ?? 4 -मु- ? 5 P सद्द- । 6 Mss omit. 7 Mss -णतो स्यै । 8 Mss -त्येव द्विल- । 9 Mss -लं । 10 B हि । 11 गृष्टि or मुष्टि ? Mss omit तु । 12 Mss दाहो यत्र यस्य प्र- । 13 P सौल्पमेध्वसं । 14 P adds वर्द्धऽद्धे । 15 P omits असौ । 16 P omits. 17 Mss -न ।

अर्धप्रदक्षिणावर्ताः केशाः सर्वे हि संस्थिताः ।
परिमण्डलश्च कायेन जितक्लेशोऽपि नायकः ॥
हृदये यस्य दाहः[1] स्याद्[2] श्लेषायां कलिप्रियः ।
दुःशीलो दुःखसंवासो मैथुनाभिरतश्च सः ॥
अध उरसि पृष्ठे वा यस्य व्रणः[3] प्रदृश्यते ।
मघायां धनवान् जातो महात्मा धार्मिको नरः ॥
नाभ्यां[4] दक्षिणवामाभ्यां व्रणो यस्य प्रदृश्यते ।
पूर्वफाल्गुनीजातोऽसौ मत्सरी चाल्पजीवितः ॥
चतुरङ्गुल[5] तो[6] नाभ्या यस्य पिन्यः प्रदृश्यते[7] ।
उत्तरफाल्गुनीजातो भोगशीलः श्रुतोद्यतः ॥
श्रोण्यामलोहितः[8] पिन्यो हस्ते जातस्य दृश्यते ।
चौरः शठश्च मायावी मन्दपुण्योऽल्पमेधसः ॥
[9]व्यंजने यस्य पिन्यस्तु दृश्यते नियमेन हि ।
चित्राजातः स चेद्रोगी[10] नृत्यगीतरतस्तथा ॥
व्यंजने[11]ऽपि च ऊर्ध्वे वा पीतः पिन्यः प्रदृश्यते ।
जातः स्वात्यामसौ लुब्धो गुण[12]-द्विष्टो ह्यपण्डितः ॥
कुगृष्ट्या[16] यस्य ऊरुभ्यां पिन्यो लोहित एव हि ।
आकीर्णो नरनारीभि[13]र्विशाखायां भटोऽग्रणीः ॥
विद्वान् शूरो जितमित्रो नित्यं सौख्यपरायणः ।
श्रिया धृत्या च सम्पन्नो[14]ऽच्युतः स्वरुपपद्यते[15] ॥
द्वितीय[16]गृष्ट्यामूरुभ्यामङ्के यस्य प्रदृश्यते ।
शीलवाननुराधायां धर्मभोगसमन्वितः ॥
अधो यस्येह चोरुभ्यां पिन्यो ज्येष्ठे स जायते ।
अल्पायुरप्रियो दुःखी दुःशीलः कृपणस्तथा ॥

---

1-2 Mss दहत्यश्ले- । 3 Mss स्वर्गः । 4 P नाभ्या । 5 Mss -ले । 6 P लतो । B नतो । 7 B प्रजायतें । 8 Mss -ण्यानलो- । 9 B व्य- । 10 P -द्रागी । 11 B व्य- । 12 Mss -णाद्वि- । 13 B -भ्यां । 14 B -न्नश्च्यु- । 15 P -गौपपद्यते, B -गौपपत्तये । 16 गृष्टि or मुष्टि ?

जानुभ्यामूर्ध्वतः सूक्ष्मो व्रणो यस्येह दृश्यते ।
मूलेन भाग्यवान् जातः स्वगृहं नाशयेल्लघु ॥
पूर्वाषाढासु[1] जातस्य पिन्यः स्याज्जानुमण्डले ।
दायको धर्म आस[2] ह्न्यच्युतः[3] स्वर्गपरायणः ॥
उत्तरायामाषाढायां जातस्य तिलक[4] स्त्रिके ।
यदि दृश्येत्स मेधावी भोगवान्स्याज्जनप्रियः ॥
द्वितीयः[5] पिन्यो दृश्येत[6] धनवान् भोगवान्[7] सदा ।
सत्य[8] प्रियस्तथारोगो[9] ऽच्युतः स्वर्गं च गच्छति ॥
धनिष्ठायां च जङ्घायां यस्य पिन्यः प्रदृश्यते ।
क्रोधनो मन्दरागश्च प्राज्ञो भोगविवर्जितः ॥
द्विकुगृष्ट्या[10] च जङ्घायां कृष्णः पिन्यः प्रदृश्यते ।
मूर्खः शतभिषायां तु म्रियते ह्युदकेन सः ॥
अधो जङ्घां[11] कुगृष्ट्या[10] तु पूर्वभाद्रपदे व्रणः ।
परोपतापको मूर्खो दरिद्रश्चौर इत्यपि ॥
कुगुष्ट्या[10] यस्य पिन्यः स्याज्जातो भाद्रपदोत्तरे ।
दानशीलः स्मृतिप्राप्तो दयापन्नो विशारदः ॥
उभयोः पादयोः सूक्ष्मः पिन्यो यस्य प्रदृश्यते ।
रैवत्यां जायते नीचो[12] नापितः स भवत्यपि ॥
अङ्गुष्ठविवरे पिन्यो नीलो यस्य प्रदृश्यते ।
अरोगो बलवान्नित्यमश्विन्यां जात एव सः ॥
अथ पाणितले[13] पिन्यो भरण्यामक्षयः स्मृतः ।
वध्यघातश्च दुःशीलः [14]स्यान्नरकपरायणः ॥
नक्षत्राणां पदं ह्येतद्येन चर्या प्रजायते ।
एतद्धि लोकप्रज्ञानं लोको यत्र समाश्रितः ॥
इति[15] पिन्याध्यायः[16] ॥

---

1 Mss -ढजात- । 2 Mss -र्ममास- । 3 Mss -ह्नस्च्युतः । 4 Mss -का- । 5 Mss -यस्य । 6 B -त् । P omits. 7 P omits. 8 P सत्त्व- । 9 Mss -गस्च्युतः । 10 गृष्टि or मुष्टि ? 11 अधोजङ्घं ? P -जं कु- । 12 B वीरो । 13 P पातले । 14 Mss -लस्च्युतो नरक- । 15 P adds श्रीदिव्यावदाने । 16 B पिण्या- ।

अथ खलु भोः पुष्करसारिन् पिटकाध्यायं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयतां। कथयतु भगवान्[1] त्रिशङ्कुः[2]।

## पिटकाध्यायः

अतः ऊर्ध्वं प्रवक्ष्यामि सर्वस्थानगतं पुनः।
स्त्रीणां च पुरुषाणां च पिटकं सर्वकर्मकं॥
लाभालाभं सुखं दुःखं जीवितं मरणं तथा।
प्राज्ञा येनाभिजानन्ति तं[3] च सर्वं[4] निबोधतां॥
तत्राभिघातदग्धा वा तिला[5] स्तद्रूपका[6] अपि।
विस्फोटवर्णभेदाश्च[7] पिटकाभिहिताः स्मृताः॥
श्वेतवर्णेन पिटको विप्राणां पूजितो भवेत्।
[8]क्षतोपमः क्षत्रियाणां वैश्यानां पीतकः स्मृतः॥
शूद्राणामसितः श्रेष्ठो विवर्णो म्लेच्छजातिषु।
यदा सवर्णपिटको मूर्ध्नि राजा महान्स्मृतः॥
शीर्षे तु धनधान्याभ्यां[9] कान्तये सुभगाय च[10]।
उपघातं भ्रुवोर्विद्यात्स्त्रीलाभो भ्रुवसङ्गमे॥
अक्षिस्थाने तु पिटकः करोति प्रियदर्शनं[11]।
अक्षिभ्रूभागे शोकाय गण्डे पुत्रवधो ध्रुवं॥
अश्रुपातः ध्रुवं शोकः श्रवणे गोषु नाशकः[12]।
कर्णपीठे[13] विभूषाय नासावंशे तु जातये[14]॥
नासागण्डे पुत्रलाभं[15] वस्त्रलाभं ध्रुवं वदेत्।
नासाग्रे जातेनाप्नोति[16] गन्धभोगानभीप्सितान्॥

1 B भवान्। 2 B -ङ्को। 3 B तां। P तांश्च। 4 Mss -वे। 5 P -ल-। 6 Mss -पकृता। 7 Mss भेदं च। 8 Mss क्षतजोपमः। 9 Mss -न्यांश। 10 P adds प्रशिष्ये प्रजणाय च। 11 P प्रदर्शनं। 12 Mss नाशयः। 13 P adds तु। 14 P -या। 15 Mss omit this *pāda* 16 Mss -तयाप्नो-।

उत्तरोष्ठे तथाधरे [1]चान्नपानं शुभाशुभं ।
चिबुके हनुदेशे च धनं गावः सतां श्रियः ॥
गले तु दानमाप्नोति पानमा[2] भरणानि च ।
शिरःसन्धौ च ग्रीवायां शिरश्छेदनमादिशेत् ॥
जातोऽयं शिरसो मूले हनुनि च धनक्षयः ।
भैक्षचर्या भवेत्सन्धौ हृदये प्रियसङ्गमः ॥
पृष्ठे तु दुःखशय्यायै[3] अन्नपानक्षयाय च ।
पार्श्वे तु सुखशय्यायै स्तने तु सुतजन्यता ॥
जातेन[4] शिवमाप्नोति न चाप्रियसमागमः[5] ।
बाह्वोः शत्रुविनाशाय युक्तं स्त्रीलाभ एव च ॥
ददात्याभरणं जातः प्रबाह्वोः कुर्परे क्षुधा ।
मणिबन्धे नियमनमंसाभ्यां हर्ष एव च ॥
सौभगं[6] धनलाभं च जातः[7] पाणौ ददाति च ।
पुष्पितो ह्येकदेशे तु दशनेषु नखेषु च ॥
जातेन[8] हृदि जानीयाद् भ्रातृपुत्रसमागमं ।
जठरे सोमदानाय[9] नाभ्यां स्त्रीलाभमादिशेत् ॥
जघने व्यसनं विद्यान्नार्या दौःशील्यमेव च ।
पुत्रोत्पत्तिस्तु वृषणे लिङ्गे भार्या तु शोभना ॥
पृष्ठान्ते सुखभागित्वं स्फिचि[10] चापि धनक्षयः ।
ऊरुजाताश्च पिटका धनसौभाग्यदायकाः ॥
जानौ शत्रुभयं विद्यात्तथैव च धनक्षयं ।
जानुसंधौ विजानीयान्मेढ्रके[11] ह्यथ जातकैः[12] ।
विजयं ज्ञानलाभं च पुत्रजन्म विनिर्दिशेत् ॥
स्त्रीलाभं वक्षसि[13] चैव[14] भवेदन्यो निरर्थकः ।
जङ्घायां परसेवा तु परदेशात्तु भुज्यते ॥

---

1 P वा । 2 Mss पातया । 3 B शस्या-, P शल्या- । 4 Mss जाताया च । 5 P reads : -या च प्रियसमागमः । 6 B सुभगं । 7 Mss जाते । 8 Mss जातायां । 9 -पानाय ? 10 Mss -गि । 11 Mss मेडने । 12 Mss -तया । 13 Mss add जङ्घायां प्रमदे । 14 P च च ।

मणिबन्धे तु पिटको बन्धनं निर्दिशेद् ध्रुवं ।
परिबाधं[1] स लभते बन्धनं च न संशयः ।
पार्श्वे गुल्फे च जानीयाच्छस्त्रेण मरणं ध्रुवं ॥
अङ्गुलीषु ध्रुवं शोको[2] व्याधिश्चाङ्गुलिपर्वसु ।
प्रवासं प्रवसेन्नित्यं तथैवोत्तरपादके ॥
यस्य पादतले जात[3] स्तथा हस्ततलेऽपि च ।
धनं धान्यं सुता गावः स्त्रियो यानानि चाप्नुयात् ॥
स्निग्धं स्निग्धेषु विज्ञेयं चलेषु च चलं फलं ।
स्थानस्थे विपुलं दद्यात् फलं नृणां शुभोदयं ॥
विवर्णो विपरीतश्च फलं सर्वं प्रयच्छति ।
पुंसां[4] मध्ये ये[5] स्निग्धाश्च[6] देशे दक्षिणतश्च ये[7] ।
तथा चाभ्यन्तरे चैव स्थाने तु प्रतिपूजिताः[8] ॥
स्त्रीणां मृदुषु देशेषु वक्त्रान्तेषु[9] च पर्वतः ।
तत्त्वं विज्ञाय पिन्यानां स्थानं[10] वर्णं च जन्म च ॥
स्थाना[11]स्थानं च मति[11]मान् विकारं गतिमेव च ।
आदिशेत् तु नरः पश्चाद्यथैवं समुदाहृतं ॥
वामभागे तु नारीणां विज्ञेयाः पिटकाः शुभाः ।
दक्षिणे तु मनुष्याणां भवन्ति ह्यर्थसाधकाः ॥
विपरीता[12] स्तु पिटका[13] मोघास्तु बहवः स्मृताः ।
यथोक्तानां च सन्धिस्थाः सर्वे विफलदाः स्मृताः ॥
सिद्धाः ध्रुवा व्रणा भिद्यास्तथा[14] सद्यःकृताश्च ये[15] ।
धर्मकीलसमाश्चैव सर्वे ते पिटकाः स्मृताः ॥
गुणदोषाश्च सर्वेषां तथाप्यन्ये प्रकीर्त्तिताः ।
इत्याह भगवांस्त्रिशङ्कुः शिष्येभ्यो[16] नित्यदर्शनं ॥

1 Mss -धे । 2 Mss -कं । 3 Mss जातं । 4 Mss पुन्ना or पुत्र । 5 Mss या । 6 B -श्चैव । 7 Mss या । 8 Mss -ना । 9 Mss वक्रा- । 10-11 P omits. 11 P omits. 12 Mss -तैः । 13 Mss -कैः । 14 Mss सिद्धाद् ध्रुवं । भि(P भी-)द्याद् व्रणः ( P -णाः ) । 15 Mss सद्यःकृतानि च । 16 Mss -ष्येशो ।

न मखेन न शस्त्रेण नायसेन कथंचन।
काञ्चनेन सुवर्णन दहेद्विप्रांश्च भोजयेद् ॥इति॥

अयं भोः पुष्करसारिन् पिटकाध्यायनामाध्यायः।

अथ खलु भोः पुष्करसारिन् स्वप्नाध्यायं व्याख्यास्यामि। तच्छ्रूयतां। अथ किं। कथयतु भगवान्[1]।

## स्वप्नाध्यायः

शुभाशुभं च स्वप्नानां यत्फलं समुदाहृतं।
देवताब्राह्मणौ[2] गावौ[3] वह्निं प्रज्वलितं[4] तथा।
यस्तु पश्यति स्वप्नान्ते कुटुम्बं तस्य वर्धते॥
यस्तु पश्यति स्वप्नान्ते राजानं कुञ्जरं हयं।
सुवर्णं वृषभं चैव कुटुम्बं तस्य वर्धते॥
सारसांश्च शुकान् हंसान् क्रौञ्चान् श्वेतां[5] श्च पक्षिणः।
यस्तु पश्यति स्वप्ने वै कुटुम्बं तस्य[5] वर्धते॥
समृद्धानि च शस्यानि नवानि सुरभीणि च।
पद्मिनीं पुष्पितां [6]चापि पुर्णकुम्भांस्तथैव च॥
प्रसन्नमुदकं चैव पुष्पाणि विविधानि च।
यस्तु पश्यति स्वप्नान्ते कुटुम्बं तस्य वर्धते॥
पाणौ पादेऽथ वा जानौ[7] शस्त्रेण धनुषापि वा।
प्रहारा[8] यस्य दीयन्ते[9] तस्याम्बरोभिवर्धते॥
ताराचन्द्रमसौ[10] सूर्यं[11] नक्षत्राणि ग्रहां[12]स्तथा।
यस्तु पश्यति स्वप्नान्ते कुटुम्बं तस्य वर्धते॥
अश्वपृष्ठं गजस्कन्धं यानानि शयनानि च।
योऽभिरोहति स्वप्नान्ते महदैश्वर्यमाप्नुयात्॥

1 P adds त्रिशङ्कुः। 2 B -णा। 3 B गावो। 4 B ह्निः प्रज्वलितः। P -ह्निप्र-। 5 P omits. 6 P वा-। 7 P जान्वोः। 8 Mss -रो। 9 B जायन्ते। 10 P -मसः। 11 Mss -र्ये। 12 Mss -हास्त-।

अन्त्रैस्तु यस्य नगरं समन्तात्परिवार्यते ।
ग्रसते चन्द्रसूर्यौ तु महदैश्वर्यमादिशेत् ॥
मनुष्यं भूमिभागं वा स्वप्नान्ते ग्रसते यदि ।
ह्रदश्च वा[1] समुद्रोयं[1] महदैश्वर्यमाप्नुयात् ॥
धनुः प्रहरणं शस्त्रं रक्त[2]माभरणं ध्वजं ।
कवचं वा लभेत्स्वप्ने धनलाभं विनिर्दिशेत् ॥
प्रपातं पर्वतं तालं वृषभं कुञ्जरं हयं ।
तोरणं नगरं द्वारं चन्द्रादित्यौ सतारकौ ।
स्वप्ने प्रपतितौ दृष्ट्वा राज्ञां व्यसनमादिशेत् ॥
उदयं चन्द्रसूर्याणां स्वप्ने दृष्टं प्रशस्यते ।
तयोरस्तं गतं दृष्ट्वा राज्ञो व्यसनमादिशेत् ॥
श्मशानवृक्षयूपं वा नरो यद्यभिरोहति ।
[3]वल्मीकं भस्मराशिं वा स्वप्ने [4]व्यसनमादिशेत् ॥
कृष्णवस्त्रा तु या नारी काली कामयते नरं ।
करवीर[5] स्रजा स्वप्ने तदन्तं तस्य जीवितं ॥
तमसि प्रविशेत् स्वप्ने शम्भोर्वा चामरं[6] तथा ।
वृक्षाद्वा प्रपतेत् स्वप्ने मरणं तस्य निर्दिशेत् ॥
वृक्षं काष्ठं[7] तृणं वापि विरूढं यस्तु पश्यति ।
स्वप्ने शीर्षं[8] शरीरं वा मरणं तस्य निर्दिशेत् ॥
देवो वा वर्षते यत्र यत्र चैवाशनिः पतेत् ।
भूमिर्वा कम्पते यत्र स्वप्ने व्यसनमादिशेत् ॥
चन्द्रादित्यौ यदि स्वप्ने खण्डौ भिन्नौ च पश्यति ।
पतितौ पतमानौ वा चक्षुस्तस्य विनश्यति ॥
काषायप्रावृतां मुण्डां नारीं मलिनवाससं[9] ।
नीलरक्ताम्बरां दृष्ट्वा आयासमधिगच्छति ॥

---

1 Mss -द्रोयं वा । 2 P चन्द्र । 3 Mss वा- । 4 P मरण- । 5 B करंचीर- । 6 P चापरं । 7 Mss तृणं का- । 8 Mss शरीरं शा- । 9 P -सां, B -सीं ।

त्रपुसीसे[1] अयस्ताम्रलोहरजतमञ्जनं ।
लब्ध्वा तु पुरुषः स्वप्ने धननाशं समच्छति ॥
गायन्ती[2] वा हसन्ती[2] वा नृत्यन्ती[2] वा विबुध्यते ।
वादित्रवाद्यमानैर्वा आयासं तत्र निर्दिशेत् ॥
कर्दमे यदि वा पङ्के सिकतास्वपसीदति ।
तत्रस्थो वा विबुध्येत व्याधिं समधिगच्छति ॥
अष्टापदैरथान्यैर्वा क्रीडेज्जयपराजये ।
क्रीडेदकुशलाङ्कैर्वा स्वप्ने दृष्ट्वा ध्रुवं कलिः ॥
आसने शयने याने वस्त्रे साभरणे गृहे ।
नष्टे भ्रष्टे विशीर्णे वा आयासमधिगच्छति ॥
सुरामैरेयपानानि शार्करमासवं मधु ।
पिबते पुरुषः स्वप्ने आयासमधिगच्छति ॥
[3]प्रसन्नेऽम्भसि चादर्शे छायां पश्यति नात्मनः ।
उत्पद्यते ध्रुवं तस्य स्कन्धन्यासो न संशयः ॥
अभीक्ष्णं वर्षते देवो जलं पांशुमथापि वा ।
अङ्गारं वापि वर्षेत[4] मरणं तत्र निर्दिशेत् ॥
जनघातं[5] विजानीयात्तत्र देशे महाभयं ।
रज्जु[6] जालेन वा स्वप्ने परचक्राद्[7] विनिर्दिशेत् ॥
उदकेन समन्ताद्वै नगरं परिवार्यते ।
जालेनान्येन वा स्वप्ने परचक्रोद्गमो भवेत् ॥
तैलकर्दमलिप्ताङ्गो रक्तकण्ठगुणो[8] नरः ।
गायते हसते चैव प्रहारं तस्य निर्दिशेत् ॥
यं कृष्णवसना नारी आर्द्रा[9] वा मलिनाथ[10] वा ।
परिष्वजेन्नरं स्वप्ने बन्धनं तस्य निर्दिशेत् ॥
कृष्णसर्पो यदि स्वप्ने ह्यभिरोहति यं नरं ।
गात्राणि वेष्टयेद्वापि बन्धनं तस्य निर्दिशेत् ॥

1 Mss -स । 2 Mss न्तो । -न्तु ? 3 B अप्रसन्ने, P असन्ने । 4 B omits. 5 Mss जल- । 6 P -क्षु । रश्मिजनेन ? 7 Mss -क्रं । 8 Mss गणो । 9 B -र्द्रं, P -र्द्रं । 10 B -नोथ ।

लताभिः स्थाणुवृन्दैर्[1] वा यन्त्रैर्वा परिवार्यते ।
स्वप्नान्ते पुरुषो यस्तु बन्धनं तस्य निर्दिशेत् ॥
यन्त्राणि[2] यदि सर्वाणि[3] वागुराबन्धनानि वा ।
यस्य छिद्येरन्[4] स्वप्नान्ते बन्धनात्स विमुच्यते ॥
विषमाणि च निम्नानि पर्वतान्नगराणि च ।
यस्तु पश्यति स्वप्नान्ते क्षिप्रं क्लेशाद्विमुच्यते ॥
पूतना वा पिशाचः वा दुश्चला मलिनाथ वा ।
एवंरूपाणि रूपाणि दृष्ट्वा स्वप्ने ध्रुवं कलिः ॥
सुस्नातं च सुवेशं च सुगन्धं शुक्लवाससं ।
पुरुषं वाथ नारीं वा दृष्ट्वा स्वप्ने महत्सुखं ॥
तृणं वृक्षमथो काष्ठं विरूढं यत्र दृश्यते ।
गृहे वा यदि वा क्षेत्रे[5] क्षिप्रं द्रव्यक्षयो भवेत् ॥
भद्रासने वाभ्यासीनो शयने वा सुसंस्कृते ।
नरो वा लभते नारीं नारी वा लभते नरं[6] ॥
नरः शुक्लमथो वस्त्रं शुक्लगन्धानुलेपितं[7] ।
स्वप्नान्ते यस्तु पश्येत स्त्रीलाभं तस्य निर्दिशेत् ॥
यस्तु ह्यन्नानि पश्येत भूषणं निगडैस्तथा ।
नरस्तु लभते भार्यां नारी वा लभते पतिं ॥
मेखलां कर्णिकां मालां स्त्रीणामाभरणानि च ।
लब्ध्वा नरो लभेद् भार्यां नारी च लभते पतिं ॥
कुञ्जरं वृषभं नागं चन्द्रादित्यौ सतारकौ ।
अभिवदेत या नारी पतिं सा लभतेऽचिरात् ॥
एषामन्यतमः कुक्षौ प्रविशेच्च यदि स्त्रियाः ।
सा काले सर्वपूर्णाङ्गं श्रीमत्पुत्रं प्रसूयते ॥
फलानि च समग्राणि वनानि हरितानि च ।
स्वप्नान्ते लभते नारी श्रीमत्पुत्रं प्रसूयते ॥

1 B -न्तैर्। P -त्तैर्। 2 Mss -न्त्रा वा। 3 Mss वा सर्पा। 4 Mss -द्येत।
5 P ग्रामे। 6 P पतिं। 7 P -पनं।

उत्पलं कुमुदं पद्मं पुण्डरीकं सकुड्मलं[1] ।
लब्धा नारी तु स्वप्नान्ते श्रीमत्पुत्रं प्रसूयते[2] ॥
उपायनसूत्रयोरन्तः सज्जं तत्र तु पिण्डकं[3] ।
स्वप्ने या लभते नारी सापि पुत्रं प्रसूयते ।
यमं तु भाजनं चापि यमं तु सा प्रसूयते ॥
म्लायन्ती[4] मथ ग्रीष्मान्ते तरुणीमात्मिकामपि[5] ।
शुष्कां दृष्ट्वा तथा स्वप्ने स्वपक्षमरणं भवेत् ॥
बाहवो यस्य वर्धन्ते चक्षुरङ्गुलयोऽपि वा ।
ज्ञातयो तस्य वर्धन्ते शत्रुणां मरणं भवेत् ॥
बध्यन्ते बाहवो यस्य चक्षुश्च व्याकुलं[6] भवेत् ।
बाहुर्वा प्रपतेद्यस्य स्वपक्षमरणं भवेत् ॥
देवो वा यदि वा प्रेतो नार्या[7] वस्त्रं फलानि वा ।
स्वप्ने प्रयच्छते यस्याः पुत्रस्तस्याः प्रजायते ॥
अपकृष्टो[8] रुदन्त्यो[9] वा नग्नोथ मलिनः कृशः ।
क्रोधं वा ... ... विनिर्दिशेत् ॥
चर्म यन्त्रं[10] गणितं[11] वा कीलं वाथ किलाटकं[12] ।
स्वप्ने लब्ध्वा च प्राप्नु[जानी]याद्ध्रुवं वस्त्रागमो भवेत् ॥
अमानुषोथ राजा वा[13] देवः प्रेतोऽथ ब्राह्मणः ।
स्वप्ने यथा ते जल्पन्ति स तथार्थो भविष्यति ॥
... ... ... पूर्वविचिन्तितं ।
यच्चानुस्मरते दृष्ट्वा यच्चापि बहु पश्यति ॥
अभ्युत्थितो यथा मार्गे[14] स्वप्नान्ते प्रतिबुध्यते ।
विषमं वा तथाध्वानं छिद्रं वा प्रतिपद्यते ॥

1 Mss -कुण्डलं । 2 P omits this line. 3 P उपारणं ( उपायनं ? ) सूत्रयोय(र ?) न्तरसज्जंस्तत्र पिण्डकं । B उपारणसूत्रयोरन्तरं तत्र तु- । 4 Mss म्लायतुम- । 5 Mss -त्मकामपि । 6 P -लीभ- । 7 B -र्यौ । 8 Mss हृष्टो (हृतो ?) । 9 Mss -न्तो । 10 Mss यन्त्र- ( यत्र ? ) । 11 Mss गनिता । 12 P कीलाटकं, B किलातकं । 13 P च । 14 P मार्गौ ।

अग्निं प्रज्वलितं तत्र शमित्वा तु प्रशस्यते ।
गृहाणां करणं शस्तं भेदनं न प्रशस्यते[1] ॥
निर्मलं गगनं शस्तं समेघं न प्रशस्यते ।
प्रसन्नमुदकं शस्तं कलुषं न प्रशस्यते ॥
अध्वानं गमनं शस्तं न क्वचित्संनिवर्तनं ।
सुवर्णदर्शनं शस्तं धारणं न प्रशस्यते[2] ॥
मांसस्य दर्शनं साधु भक्षणं न प्रशस्यते ।
मद्यस्य दर्शनं शस्तं पानं तु न प्रशस्यते ॥
पृथिवी हरिता शस्ता विवर्णा न प्रशस्यते ।
यानस्यारोहणं शस्तं पतनं न प्रशस्यते ॥
स्वप्नेषु रुदितं शस्तं हसितं न प्रशस्यते ।
प्रच्छन्नदर्शनं शस्तं नग्नं[3] नैव प्रशस्यते ॥
माल्यस्य दर्शनं शस्तं धारणं न प्रशस्यते ।
गात्रं विकर्तितं साधु प्रोक्षितं न प्रशस्यते ॥
मृदुः प्रशस्यते वातो नातिवातः प्रशस्यते ।
व्याधितो मलिनः शस्तो भूषितो न प्रशस्यते ।
पर्वतारोहणं शस्तं न तु तत्रावतारणं ॥

धूम्रा घना[4] दुन्दुभिशङ्खशब्दो[5] वातोऽभ्रवृष्टिश्च[6] तथा समन्तात्[7] ।
सर्वस्थिराणां[8] च चलश्च[9] यः स्याद्ये चान्तरे दोषकृता विकाराः ॥
पूर्वेषु रूपेषु यथावदिष्टा राजर्षयो दैवगणाश्च सर्वे ।
यद् ब्राह्मण[10] गात्रविकर्तनं च एतानि सर्वाण्यपि[11] शोभनानि ॥
यत्पूर्वरूपेषु भवेत्प्रशस्तं दुःस्वप्नमेतानि[12] शमं[13] नयन्ति ।
गावः प्रदानं द्विजपूजनं च दुःस्वप्नमेतेन परिजितं स्यात् ॥

1 B reads here the following 8th to 10th lines which are also found in their proper place. 2 P omits the 2nd *pāda*. 3 Mss भग्नं । 4 Mss omit. 5 Mss -ब्दं । 6 Mss -ष्टिं च । 7 B समन्ते, P समते । 8 P -स्थिनाणां । B सर्वा- । 9 Mss -लं च । 10 Mss -णं । 11 B omits पि । 12 Mss -मेते । 13 Mss प्रशमं ।

देवं च यं भक्तिगतो मनुष्यस्तं तु परां[1] श्चार्चयितुं यतेत ।
स्वप्नं तु दृष्ट्वा प्रथमे प्रदोषे संवत्सरान्तेऽस्य विपाकमाहुः ॥
षण्मासिकं यश्च भवेद् द्वितीये षट्पाक्षिकं[2] यत्तु[3] भवेत्[4] तृतीये ।
अध्यर्धमासे[5] तरमेव य[6] त्स्यात् फले [7]च्चतुर्थे रजनीप्रभाते ॥
द्विजोत्तमे वा तिलपात्रदानं शान्तिक्रियाः स्वस्त्ययनप्रयोगाः ।
पूजा गुरूणां परिमिष्ट[8] मन्त्रं दुःस्वप्नमेतानि विनाशयन्ति ॥

अयं भोः पुष्करसारिन् स्वप्नाध्यायनामाध्यायः । अथ खलु भोः पुष्करसारिन्नपरमपि स्वप्नाध्यायं व्याख्यास्यामि । तच्छ्रूयतां । अथ किं । कथयतु भगवांस्त्रिशङ्कुः ।

## अपरः स्वप्नाध्यायः

शुभाशुभानां स्वप्नानां यत्फलं समुदाहृतं ।
निमित्तं यादृशं यस्य शृणु वक्ष्यामि तत्त्वतः ॥
जाग्रतो यदि वा त्रस्तो दिवा स्वप्नानि पश्यति ।
न तु भयं भवेत्तस्य जानीयादेव बुद्धिमान् ॥
यस्य तु यो भवेच्छत्रुर्यस्य विधेयमिच्छति ।
स्वप्ने तु कलहं दृष्ट्वा क्षिप्रं प्रीतिर्भविष्यति ॥
रजन्यां पुरिमे यामे योऽद्राक्षीत्सुखदुःखदं ।
अध्वानं चिरकालेन तथा ह्येष[9] निवर्तते ॥
मध्यमे भवते नैव क्षिप्रं भवति पश्चिमे ।
वैमार्गं त्वरितं दृष्ट्वा स्त्रीलाभमभिनिर्दिशेत् ॥
दृष्ट्वा जलचरान्मत्स्यानेवं जानीत बुद्धिमान् ।
यत्किञ्चिदारभिष्यामि[10] क्षिप्रमेव भविष्यति ॥
चम्पायां धृषणं[11] हस्ते धृषे[12]त्स्वप्नान्तरेषु वा ।
प्रतिबुद्धो विजानीयाद् वर्णमेवं भविष्यति ॥
सर्वाणि खलु पानानि मधुराणि सुखानि च ।
यस्तु पिबति स्वप्नान्ते स च लाभैः[13] प्रयुज्यते ॥

1 Mss -राश्चा- । 2 Mss -की । 3 Mss यो । 4 B भवति । 5 -से + इतरं (=रत्) । 6 P तं । 7 Mss -चतु- । 8 = -मृष्ट- । 9 Mss एते । 10 -ष्येऽहं ? 11 =धर्षणं । P मृषणं । 12 =धर्षेत् । B धृषयेत् । P भृस्वप्रान्तरे । It omits षु वा । 13 Mss स मलायैः ।

श्वश्रृगालैर्भक्ष्यते[1] ऽत्र स्वप्ने संपरिवार्यते ।
प्रतिबुद्धस्तु जानीयात् शत्रुरेव[2] प्रमूर्च्छति ॥
उपरि काका गृध्राश्च धावन्त्युपरि यान्ति च ।
प्रतिबद्धो विजानीयाच्छत्रुर्मां वधयिष्यति ॥
यस्य परगृह[3] श्वानो द्वारे मूत्रं प्रकुर्वते ।
प्रतिबुद्धो विजानीयाद्भार्या मे जारमिच्छति ॥
एकश्च धरणौ[4] पादो द्वितीयः शिरसि स्थितः ।
प्रतिबुद्धो विजानीयाद्राज्यलाभो[5] भविष्यति ॥
समुद्रं यदि पश्येद्वा पातुमिच्छति तज्जलं ।
प्रतिबुद्धो विजानीयाद्राज्यलाभो[5] भविष्यति ॥
वृक्षं पर्वतमारुह्य नागं च तुरगं तथा ।
प्रतिबुद्धो विजानीयाद्राज्यलाभो[5] भविष्यति ॥
यस्तु स्वप्नान्तरे पश्येत् पितृृन् यानिह[6] चान्यथा ।
तथा माता पिता चैव तस्य जीवन्ति ते चिरं ॥
यस्तु स्वप्नान्तरे पश्येत्केशश्मश्रु विकर्तितं ।
प्रतिबुद्धो विजानीयादर्थसिद्धिर्भविष्यति ॥
आननं चोदके[7] दृष्ट्वा मध्येऽग्नौ च विधावितं ।
प्रतिबुद्धो विजानीयात् कुलवृद्धिर्भविष्यति ॥
धावनं लङ्घनं चैव ग्रामाणां परिवर्तनं ।
प्रतिबुद्धो विजानीयादात्मानं शातितमिति[8] ॥
चौराणामपि सामग्रीं स्वप्नान्ते यस्तु पश्यति ।
प्रतिबुद्धो विजानीयादात्मानं शातितमिति[9] ॥
कृष्णसर्पगृहीतं तु स्वप्नान्ते यस्तु[10] पश्यति ।
प्रतिबुद्धो विजानीयाच्छत्रुपीडा भविष्यति ॥

---

1 Mss श्वश्रृगालान् भक्षयेद्यत्र । 2 B -त्रुमेव । P -त्रूमेव । 3 Mss -गृहे ।
4 Mss -रणी । 5 P -लम्भो । 6 B -पितृृणियानि । P -पितृयानि । 7 P -नमुदके- ।
8 Mss गतिका इति । 9 Mss -तिका इति । B puts this *śloka* after the following one. 10 P यन्तु ।

कटकान्[1] कर्णिकाश्चैव हंस[2] केयूरकुण्डलं[3] ।
यस्तु चाभरणं पश्येद् बन्धुवर्गो भविष्यति ॥
कुड्ये च गृहप्राकारे धावतीह परस्परं ।
नाविके धनसंयोगे अंगते क्षणयं खजः[4] ॥
यस्तु स्वप्नान्तरे पश्येच्चात्मानमग्नितापितं ।
प्रतिबुद्धो विजानीयाज् ज्वरं[5] क्षिप्रं भविष्यति ॥
राजानं कुपितं दृष्ट्वा आत्मानं मलिनीकृतं ।
प्रतिबुद्धो विजानीयात्कुटुम्बं तस्य नश्यति ॥
काष्ठभारं तृणं चैव बहुभारमभीक्ष्णशः ।
आत्मनः शिरसो दृष्ट्वा गुरुव्याधिर्भविष्यति ॥
यस्तु वानरयुक्तेन गच्छते पुरिमां[6] दिशं ।
प्रतिबुद्धो विजानीयाद्रात्रिरेषा [7]ह्यपश्चिमा ॥
चन्द्रसूर्यौ च संगृह्य पाणिना परिमार्जति ।
प्रतिबुद्धो विजानीयादार्यधर्मागमो हि सः ॥
सुमनां[8] वार्षिकं [कीं] चैव कुमुदान्युत्पलानि च ।
यस्तु पश्यति स्वप्नान्ते दक्षिणीय[9] समागमः ॥
ब्राह्मणं श्रमणं दृष्ट्वा क्षपणं सुरनायकं ।
प्रतिबुद्धो विजानीयाद्यक्षा मे ह्यनुकम्पकाः ॥
रुधिरेण विलिप्तस्य स्नात्वा चैवात्मलोहितैः ।
प्रतिबुद्धो विजानीयादैश्वर्याधिसमागमः ॥
मुद्गमाषयवां[10]श्चैव धान्यं[11] ज्वलनदर्शनं ।
यस्तु स्वप्नान्तरे पश्येत्सुभिक्षं तत्र निर्दिशेत् ॥
सुवर्णं च तथा रूप्यं मुक्ताहारं तथैव च ।
यस्तु स्वप्नान्तरे पश्यन्निधिं तत्र विनिर्दिशेत् ॥
बन्धनं बहु दृष्ट्वा तु छेदनं कुट्टनं तथा ।
प्रतिबुद्धो विजानीयादर्थसिद्धिर्भविष्यति ॥

1 Mss -काः । 2 B हर्ष। P हष । 3 Mss -लाः । 4 ?? 5 B द्वारं । 6 =पूर्वां । cf. Pali. 7 P omits ह्य । 8 Mss -ना । 9 Mss -यः स- । 10 Mss मुद्गा माषा यवाश्चै- । 11 Mss धान्य- ।

अयं भोः पुष्करसारिन्निपरः स्वप्नाध्यायः ।

अथ खलु भोः पुष्करसारिन् मासपरीक्षानामाध्यायं व्याख्यास्यामि । तच्छ्रूयतां । कथयतु भगवांस्त्रिशङ्कुः ॥

## मासपरीक्षा

यदि फाल्गुने मासे निर्घोष[1] उपरि भवेत् मनुष्याणां मरणं[2] चोदयति। नवचन्द्रो लोहिताभासो दृश्यते। सर्वसस्यानुत्पत्तिं चोदयति। यदि देवो गर्जति प्रथमं महासस्यानि भवन्ति । पश्चिमसस्यं न[3] भवेत्[3] । कलहं चोदयति ।

यदि चैत्रे मासे देवो गर्जति[4] तदा सर्वसस्यसमुत्पत्तिं चोदयति। यदि चन्द्रग्रहो भवति महान्सन्निपातो भवति। शून्यानि ग्रामक्षेत्राणि भविष्यन्ति। यदि नीहारं भूमिं छादयति[5] सुभिक्षं चोदयति।

यदि वैशाखे मासे देवो गर्जति सुभिक्षं चोदयति। यदि पूर्वे पश्चिमे शङ्कुं चन्द्रग्रहो भवति क्षेमं चोदयति । यदि चोल्कापातो भवति यस्मिंश्च जनपदे निपतति तत्र देशे प्रधानपुरुषस्य विनाशो भवति। यदि भूमिचालो भवति सुभिक्षं चोदयति।

यदि ज्येष्ठे मासे देवो गर्जति रोगं चोदयति। यदि सूर्यग्रहो[6] भवति मनुष्याणां विनाशं चोदयति। पूर्वे[7] पश्चिमे वा शङ्कुं यदि चन्द्रस्य सूर्यस्य किञ्चिन्निमित्तं लक्ष्यते तदा क्षेमं चोदयति। यदि मध्यरात्रौ चन्द्रग्रहो भवति मनुष्याणामन्योन्यघातं चोदयति। यदि चोपरि निर्घोषो भवति अध्यक्षपुरुषस्य पीडां चोदयति। परचक्रागमं चेति।

आषाढे मासे यदि सूर्यग्रहो रुचिराभासो भवति सुभिक्षं चोदयति। यदि चन्द्रग्रहो भवति रोगं चोदयति। यदि विद्युन्निश्चरति कल्याणं चोदयति। यदि नीहारं भूमिं छादयति।

श्रावणमासे यदि सूर्यग्रहो भवति राज्यं परिवर्तते। यदि चन्द्रग्रहो भवति प्रथमे मासे दुर्भिक्षं चोदयति। शरभैः शोभनशस्यनाशो भविष्यति। यदि

1 Mss -षमु-। 2 P omits. 3 Mss वित्। 4 P adds देवो वर्षति। 5 Mss चोद्-। 6 Mss -हणो। 7 Mss पूर्व।

तारका यत्र देशे पतन्ति तत्र युद्धं चोदयति। यदि चातिशयं भूमिचालो भवति रोगं चोदयति। यदि निर्घोषो भवति तत्र गृहे यो गृहस्वामी भवति तस्य विनाशं चोदयति। अत्र च मासेऽभिनवं प्रावरणं न प्रावरितव्यं। आवाहो[1] विवाहो[2] न कर्तव्यः[3]। परिभूतो भवति।

यद्यश्वयुजे मासे देवो गर्जति मनुष्याणां विनाशनं चोदयति। यदि सूर्योपरागो भवति महापुरुषविनाशं चोदयति। यदि पूर्वे यामे चन्द्रस्य निमित्तं दृश्यते सुभिक्षं चोदयति। यदि भूमिचालो भवति आकुलं चोदयति। परराजा[4] देशं हनिष्यति। तत्र च मनुष्या अन्योन्यं वधयिष्यन्तीति चोदयति।

यदि कार्त्तिके मासे देवो[5] वर्षति महदाकुलं चोदयति। प्राणकाश्च धान्यं खादिष्यन्ति। यद्येकान्तरूपं वातो वाति तत्र च मनुष्या जलेन विभ्रमिष्यन्ति। महात्मनः पुरुषस्य विनाशं चोदयति। यदि पूर्वे यामे उत्पातो भवति महावर्षं भवति। महापुरुषस्य च मरणं भवति। यदि निर्घोषो भवति रोगं[6] चोदयति।

यदि मार्गशीर्षे मासि देवो गर्जति शस्यविनाशो भवति। अन्यश्च तत्र स्वामो भवति। यदि चाकाशे निर्घोषो भवति यत्पूर्वभागीया मनुष्यास्तेषामामयं चोदयति। यदि भूमिचालो भवति यस्तत्र जनपदे[7] प्रधानपुरुषो[8] स [9]वधान्मोक्ष्यति।

यदि पौषे मासे देवो गर्जति प्रथमे यामे[10] जनपदनाशो भवति। द्वितीये[11] महात्मनः पुरुषस्य बन्धनं चोदयति। प्रथमे यामे[12] च यदि चन्द्रोपरागो भवति लोहितवर्णश्च दृश्यते उदकागमं चोदयति। महात्ममनुष्यं चोदयति। यदि सूर्यग्रहो भवति शुद्रपुरुषाणां रणं। यदि तारकाः पतन्त्यो[13] विदृश्यन्ते तत्र जनपदे आकुलं चोदयति। यद्याकाशे निर्घोषो भवति मनुष्याणां मरणं चोदयति। यदि द्वितोये निर्घोषो भवति मनुष्याश्चौरैर्हन्यन्ते[14]। यद्यत्रैव मासे तारका उत्सृष्टा[15] न चन्द्रो दृश्यते सस्यं संचोदयति। यदि भूमिचालो भवति महामनुष्यस्य मरणं भवति। अत्रैव मासे देवस्थानं कर्तव्यं। वृक्षा रोपयितव्याः। [16]मूलघास्तु प्रतिष्ठापयितव्यं[17]।

---

1 Mss -ह-। 2 Mss -हं। 3 Mss -व्यं। 4 B -राज्ञा। P -परोज्ञा or परेज्ञा। 5 P देवाति मेन्महाकुलं। 6 B मरणं। 7 B नगरे। 8 B adds भवति। 9 बन्धा-? 10 P -मेन। 11 Mss -येन। 12 P omits. 13 Mss पतन्ति तादि। 14 Mss -न्यते। 15 Mss उत्सिष्टा। 16 B मूलस्तु। 17 P -व्या। B परिस्थापयितव्यः।

अयं भोः पुष्करसारिन्मासपरीक्षानामाध्यायः ।

अथ खलु भोः पुष्करसारिन् खञ्जरीटकज्ञानं नामाध्यायं व्याख्यास्यामि । तच्छ्रूयतां । अथ किं । [1]कथयतु भगवान् त्रिशङ्कुः ॥

## खञ्जरीटकज्ञानं

खञ्जरीटकशास्त्रं वै पर्वते गन्धमादने ।
[2]कुचरैर्दृश्यते सौम्य[3] कुचरस्य महाभयं ॥
यानि तानि[4] निमित्तानि दर्शयेत्खञ्जरीटकः ।
प्रचरतो[5] भवेद् दृष्ट्वा पञ्चोत्तरपदो द्विजः ॥
तत्र सर्वे प्रवर्तेयुर्यत्र येषु [6]भवेद्भवेत्[6] ।
शाद्वले बहुचेलत्वं गोमयेषु प्रबन्धता ॥
कञ्चारे[7] बहुचेलत्वं कर्दमे बहुभक्षता ।
कृकरे[8] स्वल्पचेलत्वं[9] पुरीषे तु कृशं श्रवः[10] ॥
भस्मे विवादमफलं[11] वालुकायां तु संभ्रमः[12] ।
देवद्वारे तु सम्मानं पद्मेषु बहुवित्तता ।
फले[13]ऽर्थानुगुणं प्रोक्तं[14] पुष्पेषु[14] प्रियसंगमः ॥
भयं प्राकारशृङ्गेषु कटकेष्वरिदर्शनं ।
पक्षया[15] चरते व्याधिः पतितो[16] मृत्युमादिशेत् ॥
सुगन्धतैलभूतानि[17] मैथुने निधिदर्शनं ।
वृक्षाग्रे विद्यते[18] पानं गृहेष्वथ......लसः ॥
देशभङ्गः[19] प्रवादे[20] च बन्धनं विग्रहीकृते ।
अमृतं च स्थितं दृष्ट्वा ओदनं[21] नात्र संशयः ॥
गवां पृष्ठे ध्रुवं सिद्धिरश्वपृष्ठे ध्रुवं जयः ।
[22]अविकानामजानां च पृष्ठे सर्वत्र शस्यते ॥

---

1 B adds तत् । 2 Mss कुचरा । 3 Mss -म्यं । 4 P omits. 5 P -न्तो । 6 P भवे । 7 B कांचाषे । P -कांचीषे । कार्पासे ? 8 B कृकत्वे । P कृकटे । 9 B सर्व- । 10 Mss -वं । 11 B -वाह्म- । 12 Mss -मं । 13 Mss add च । 14 P omits. 15 Mss पक्षा प्रच- । 16 Mss -तं । 17 ? 18 Mss विद्यया । 19 Mss -ङ्ग । 20 P -डे । शकटे ? 21 Mss रोधनं । 22 Mss आवि- ।

उष्ट्रपृष्ठे ध्रुवं क्लेशः श्वानपृष्ठे च विद्रवः।
पृष्ठे च गर्दभस्येह मरणं नात्र संशयः॥
कीले तु मरणं विद्याद् यूपाग्रे च न संशयः।
कुम्भस्थाने श्मशाने वा मृतो वा यत्र दृश्यते॥
अन्तरीक्षे प्रडीनं तु[1] अफलं तु विनिर्दिशेत्।
दृष्ट्वा समागतं वासं प्रहृष्टं खञ्जरीटकं।
यथास्थानं यथावर्णं मनुष्याणां विनिर्दिशेत्[2]॥
विषमे स्वल्पकक्षेषु[3] प्रसक्तः कलहो भवेत्।
समेषु समके क्षेत्रे समान् वर्णान्[4] विनिर्दिशेत्[5]।
नद्यां तु शैलवाहिन्यां प्रवासमभिनिर्दिशेत्॥
काष्ठेषु नातिका[6] चिन्ता तथास्थिषु धनक्षयः।
यां दिशं समुदागच्छेत् पश्चोत्तरपदः खगः।
तां दिशं गमनं विद्याद्यथा तस्य तथा पुनः॥
कीटा वाथ पतङ्गा वा भयं यदिह दृश्यते।
प्रचुरापि यदाशेया नरस्यास्थीनि[7] निर्दिशेत्॥

अपां समीपे गजमस्तके वा सूर्योदये ब्राह्मणसन्निधौ वा।
मुख्य[8] प्रकाशेऽप्यहिमस्तके वा यः पश्यते खञ्जनकं[9] स धन्यः॥
मातङ्गराजो मतिमांस्त्रिशङ्कुः प्रोवाच तत्त्वं खञ्जनं[10] च शास्त्रं।
[11]स्निग्धे सरुक्षे विषमे समे च आदेश[12]यद् दोषगुणैर्यथोक्तैः।
तमादिशेत्तत्र समीक्ष्य विद्वान् शुभाशुभं तत्फलमादिशेच्च॥

अयं भोः पुष्करसारिन् खञ्जरीटकज्ञानं[13] नामाध्यायः।

अथ खलु भोः पुष्करसारिन् शिवारुतं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयतां। अथ किं। कथयतु भगवान् त्रिशङ्कुः।

---

1 Mss प्रडीयन्तो। 2 P निवेशयेत्। 3 B -कच्छेषु। 4 B पर्णान्। 5 B विशिष्यते। 6 ? 7 B -स्यास्थिनि। P -स्थिनिर्दर्शयेत्। ?? 8 P पुण्य-। 9 P खञ्जरकं। 10 Mss -ननं। 11 Mss add here : निवेदनं सत्त्वस्य शुभाशुभं। 12 Mss -शये-। 13 P -ज्ञानो। B -टकना-।

# शिवारुतं

नमः सर्वेषामार्याणां। नमः सर्वेषां सत्यवादिनां। तेषां सर्वेषां तपसा वीर्येण च इमं शिवारुतं नामाध्यायं व्याख्यामि।

इत्याह भगवांस्त्रिशङ्कुः। शाण्डिल्यमिदमब्रवीत्। यादृशं च यथा[1] वाशेत्तेषां सर्वेषां वाशान्[2] शृणोथ[3] मे। पूर्वस्यां दिशि यदि वाशेत् शिवा पूर्वमुखं स्थित्वा त्रीन् वारान् वाशेद् वृद्धिं निवेदयति। चतुरो वारान् यदि वाशेदत्र मङ्गलं निवेदयति। पञ्च वारान् वाशेद्वर्षां निवेदयति। षड्वारान्वाशेत्परचक्रभयं निवेदयति। सप्तवारान्वाशेद् बन्धनं निवेदयति। अष्ट वारान् वाशेत्[4] प्रियसमागमं निवेदयति। अभीक्ष्णं वाशेत् परचक्रभयं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः।

दक्षिणायां दक्षिणमुखं स्थित्वा त्रिवारान्वाशेद् 'अतृ अतृ' कुरुते मरणं तत्र निवेदयति। चतुरो वारान् वाशति दक्षिणमुखं स्थित्वा दक्षिणाया एव दिशायाः प्रियसमागमं निवेदयति। अर्थलाभं च निवेदयति। पञ्चवारान्वाशेदर्थं निवेदयति। षड्वारान् वाशेत्सिद्धिं निवेदयति। सप्तवारान्वाशेद् विवादकलहं निवेदयति। अष्टवारान् वाशेद्भयं निवेदयति। अभीक्ष्णं वाशेदाकुलं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः।

पश्चिमायां[5] पश्चिमाभिमुखं[6] स्थित्वा शिवा त्रिवारान् वाशति मरणं निवेदयति। चतुर्वारान्वाशति बन्धनं निवेदयति। पञ्चवारान्वाशति वर्षं निवेदयति। षड्वारान् वाशति अन्नपानं निवेदयति। सप्तवारान् वाशति मैथुनं निवेदयति। अष्टवारान् वाशति अर्थसिद्धिं निवेदयति। अभीक्ष्णं वाशति महामेघं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः।

उत्तरस्यां दिशि उत्तराभिमुखं[7] स्थित्वा त्रिवारान् वाशति पुरुषस्य प्रस्थितस्य निरर्थकं गमनं भवति। चतुर्वारान् वाशति राजप्रतिभयं निवेदयति। पञ्चवारान् वाशति विवादं निवेदयति। षड्वारान् वाशति कुशलं निवेदयति। सप्तवारान् वाशति वर्षां निवेदयति। अष्टवारान् वाशति[8] राजकुलदण्डं निवेदयति।

---

1 Mss तथा। 2 Mss omit वा। 3 Mss तृशोंध मे। for शृणोथ cf. Vedic शृणोत Imp. pl. 4 B वासयति। 5 P omits. 6 P -मामुखा। 7 P -रामु-। 8 Mss read वास् for वाश् throughout.

अभीक्ष्णं वाशति यक्षराक्षसपिशाचकुम्भाण्डभयं निवेदयति । इत्याह भगवांस्त्रिशङ्कुः ।

दिशि विदिशि चैव गिरिप्राग्भारेषु शिखरेषु निर्देशं तं च शृणोथ मे। "अमूं तुष्येत्[1] पिपासार्ता[2] विद्यासिद्ध्यै तथैव च"।

विद्यालम्भं धनलम्भं निर्दिशेद्ध विचक्षणः ।
तीर्थाकार[3] वृक्षमूले वाशती[4] यदि दृश्यते ॥

सर्वत्र सिद्धिं निर्दिशेत् । न च शृगालभये शिवा (वा) मे समेति अप्रमत्तेन स्मृतिमता पूजयितव्या[5] शिवा नित्यं । गन्धपुष्पोपहारेण शुश्रूषा कर्तव्या । एवमर्चायमाना (?) सर्वसिद्धिं निवेदयिष्यति । एवं "सर्वेऽर्थास्तस्य सिध्यन्ति त्रिशङ्कोर्वचनं यथा" । क्रौष्ट्रिको यदि वाशति अर्थलम्भं निवेदयति । अधोमुखो यदि वाशति निधानं तत्र निवेदयति । ऊर्ध्वमुखो[6] यदि वाशति वर्षां तत्र निवेदयति । द्विपथे यदि वाशति पूर्वमुखं स्थित्वा अर्थलाभं निवेदयति । दक्षिणाभिमुखो यदि वाशति यथा प्रियसमागमनं निवेदयति । द्विपथे पश्चिमाभिमुखो यदि वाशति कलहं विवादं विग्रहं मरणं च निवेदयति । कूपकण्ठके यदि वाशति अर्थं तत्र निवेदयति । शाड्वले यदि वाशति [7]अर्थसिद्धिं निवेदयति । अतिमृदुकं यदि वाशति[8] व्याधिकं तत्र निवेदयति । गीतहारेण यदि वाशति अर्थमनर्थं च निवेदयति । त्रिभिर्वारैरर्थं चतुर्भिरनर्थं पञ्चभिः प्रियसमागमं षड्भिर्भोजनं सप्तभिर्भयमष्टभिर्विग्रहं विवादं च । इत्याह भगवांस्त्रिशङ्कुः ।

"अथ भूयः प्रवक्ष्यामि अनुपूर्वं शृणोथ मे"। नानाहारे यदि वाशति मार्गे संस्थितस्यापि सर्वं वक्ष्यामि तं शृणोथ मे। संप्रस्थितस्य पुरुषस्य शिवा वाशति वा या पूर्वमुखं स्थित्वा[9] क्षिप्रगमनमर्थसिद्धिं निवेदयति । अथ दक्षिणमुखं वाशति या अर्थसिद्धिं निवेदयति[10] । पश्चान्मुखं वाशति भयं निवेदयति । अथोत्तरमुखं वाशति अर्थलाभं निवेदयति । अथ संप्रस्थितस्य वाशति या पुरतः स्थित्वा उपक्लेशं निवेदयति[11] । अथ दक्षिणे वाशति यदि दक्षिणमुखा[12] एव दिशः

---

1 B अभुमतुंक्ष्यत्, P अमुमभुंज्यत् । 2 Mss -सार्थं विद्यासिद्धिं । 3 B -रे । 4 Mss वासते । 5 Mss -व्य । P शिवो । 6 P omits. 7 P adds या । 8 Mss add या ( it should be यो ) । 9 B adds वा । 10-11 P omits these four sentences. 12 P -णार्चा ।

कर्मसिद्धिं च निवेदयति। पश्चिमतो यदि वाशति चौरतोऽहितमस्य[1] दुःख-दौर्मनस्यं निवेदयति। अथ मार्गे व्रजतो[2] दक्षिणतो वाशति महाव्याधिमनर्थं चौरा मुषन्ति[3] तन्निवेदयति। ग्लानस्य यदि वाशति दक्षिणमुखं, "न स[4] चिकित्सितुं शक्यो[5] मृत्युदूतेन चोदितः"। ग्लानस्य यदि वाशति उत्तरमुखं स्थित्वा आरोग्यधनलाभं च निवेदयति। अथ मूर्ध्ना[6] वाशति या उपक्लेशं निवेदयति। अथ पश्चिममुखं स्थित्वा या अन्योन्यं व्याहरते[7] यमशासनं[निवेदयति]। नानाहारे यदि वाशति, या संक्षोभं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः।

शिवा पुरतः पुरुषस्य मार्गप्रयातस्य यदि वाशति, या अग्रतः क्षेममार्गं विज्ञापयति। अर्थसिद्धिं निवेदयति। मार्गं व्रजतोऽस्य शिवा वामेनागत्य गच्छते दक्षिणमुखं क्षेममार्गं विजानीयादर्थसिद्धिं च निवेदयति। मार्गे व्रजतः पुरुषस्य शिवा वामेनागत्य पुरता वाशति या तथा[8] सभयं[9] मार्गं विज्ञापयति। निवर्तेत विचक्षणः। दक्षिणां दिशं वामं गत्वा वामतः परिवर्तेत "न तन्मार्गेण[10] गन्तव्यं त्रिशङ्कुवचनं यथा"। पुरतः शिवा गत्वा अग्रतश्च निषीदति सभयं मार्गं विजानीयात्। निवर्तेत विचक्षणः। शिवा पुरत आगत्य वामेन परिवर्तते 'भयमेतीह' तेनापि भयं जानीयाद्विचक्षणः। सेनायामावाहितायां[11] शिवा वाशति पश्चिमं निवर्तनं निवेदयति। यदि गच्छेत्पराजयः। [12]सेना न[13] गच्छेत्। सेनायां व्रजमानायां शिवा आगच्छेदग्रतः सेनाजयं[14] निवेदयति। परचक्रपराजयं च निवेदयति। सार्थस्य व्रजमानस्य शिवा गच्छत्यग्रतः क्षेममार्गं निवेदयति। अर्थसिद्धिं तथैव च। पुरुषस्य पथि व्रजतो वामतो[15] वाशति मार्गं निवेदयति। "तन्मार्गेण[16][हि]गन्तव्यं त्रिशङ्कुवचनं यथा"।

"ग्रामस्य नगरस्यापि चैत्यस्थाने तथैव च"। पूर्वेणोत्तरेणापि शिवा वाशति क्षेमं तत्र निवेदयति। दक्षिणे पश्चिमे यदि वाशति या भयं तत्र निवेदयति।

वामतो न प्रशंसन्ति तथैव विदिशासु च।
अतिदीर्घातिरूक्षा[17] वा काले मासान्तिके तथा।
अधरां तु भयं वक्ष्ये त्रिशङ्कुवचनं यथा॥

---

1 B चौरतहि-। P चौरमहि-। 2 P व्रजि-। 3 B मख-। 4 Mss तं। 5 Mss -क्यं। 6 B मूर्द्धा। 7 Mss या अनन्यभव्यास्थिते। 8 Mss add भयं। 9 B omits it. 10 Mss -र्गं। 11 Mss -वाहायां। 12 Mss पराजयं। 13 Mss omit it. 12-14 P omits. 15 P omits. 16 Mss -र्गं। 17 Mss -रुक्ता।

मधुस्वरां[1] शिवां ज्ञात्वा काले वेले उपस्थिते।
क्षेमं [2]चैवार्थसिद्धिश्च[3] चिन्तितव्यं विचक्षणैः॥

व्याधिरुपद्रवाश्च[4], "सव तु प्रशमं यान्ति त्रिशङ्कुवचनं यथा"[5]। शिवारुतस्योपचारो दिग्विदिशासु निमित्ता ग्रहीतव्याः। [6]यः शिवाया दिवसो भवति स[7] दिवसो[8] ज्ञातव्यः[9]। पुष्पगन्धमाल्योपहार[10]स्तद्दिवसे[11] उपपादयितव्यः[12]। नित्यं देवतागुरुकेण भवितव्यं। देव्यागुरुकेण भवितव्यं। देव्यै शुश्रूषा कर्तव्या। सर्वार्थान्सम्पादयिष्यति। सर्वकार्याणि निवेदयति।

यत्किञ्चित्कार्यमारभिष्यति तत्सर्वं निवेदयति। देव्यै सर्ज्जरसो[13] गुग्गुलु[14] च धूपयितव्यं। पुष्पबलिश्च[15] यथाकाले दापयितव्यः[16]। इत्याह भगवांस्त्रिशङ्कुः।

शिवारुतकथनेऽत्र विद्यां वक्ष्यामि यथासत्यं भविष्यति।

नम [17]आरण्यायै। चीरिण्यै[18] स्वाहा सज्जरसधूपं[19]।

अयं भोः पुष्करसारिन् शिवारुतनामाध्यायः।

अथातः पुष्करसारिन पाणिलेखानामाध्यायं व्याख्यास्यामि। तच्छ्रूयतां। अथ किं कथयतु भगवांस्त्रिशङ्कुः।

---

1 Mss मधुर-। 2 P -मं चार्थ-। 3 Mss -द्धिं च। 4 Mss -द्रवं च। 5 P यदा। 6 Mss यं। P यं शिवाय दिवाय दिव-। 7 Mss तं। 8 Mss -सं। 9 Mss -व्यं। 10 Mss -हारं। 11 Mss तं दि-। 12 Mss -व्यं। 13 Mss सज्जरसं। 14 B -लुं, P गुर्गुलुं। 15 Mss -लिं च। 16 Mss -व्यं। 17 Mss अर-। 18 Mss चिराणीयै। चीरिण्यै? 19 Mss सज्ज-।

# पाणिलेखा

अथातः संप्रवक्ष्यामि नराणां करसंस्थितं ।
लक्षणं सुखदुःखानां जीवितं मरणं तथा ॥
अङ्गुष्ठमूलमाश्रित्य ऊर्ध्वरेखा प्रवर्तते ।
तत्र जातं सुखतरं द्वितीया ज्ञानमन्तरे[1] ॥
तृतीया सा लेखा[2]-यत्र प्रदेशिन्या प्रवर्तते ।
तत्रोक्ता हेतवः शास्त्रे[3] समासेन चतुर्विधाः[4] ॥
अपर्वसु च पर्वाणि नक्षत्राणामुपद्रवः[5] ।
द्विनिःसृतो[6] विशुद्धात्मा जीवेद्वर्षशतं हि सः[7] ॥
त्रिंशत् त्रिभागेन जानीयादर्धे[8] पञ्चाशदायुषः ।
[9]सप्ततिस् त्र्यंशभागेषु अत्यन्तानुगते शतं ॥
आयुर्लेखा प्रदृश्यैवं[10] व्यन्तरायः[11] प्रकाश्यते ।
नक्षत्रसंज्ञया ज्ञेया मनुजै[12]रर्थशास्तथा ॥
अङ्गुष्ठोदरमार्गे तु यावत्यो यस्य राजयः ।
तस्यापत्यानि[13] जानीयात् तावन्ति[14] नात्र संशयः ॥
दीर्घायुषं विजानीयाद् दीर्घलेखा तु[15] या भवेत् ।
ह्रस्वायुषं विजानीयाद्ध्रस्वलेखा[16] तु या भवेत् ॥
अङ्गुष्ठमूले यवको रात्रौ जन्माभिनिर्दिशेद् ।
दिवा[17] तु [17]जन्म निर्दिष्टमङ्गुष्ठयवके[18] ध्रुवं ॥
अव्यक्तो यवको यत्र[19] तत्र लग्नं[20] विनिर्दिशेत् ।
लग्नं पुंसंज्ञको ज्ञेयो[21]ऽहोरात्रं[22] विनिर्दिशेत् ॥

---

1 =ज्ञानलेखा । -ता सुखकरा द्वितीया ज्ञानसंज्ञका ? 2 B माले- । P माल- । आयुर्लेखा 3 Mss पात्रे । 4 Mss -धा । 5 Mss -त्राणि रुपद्रवं । 6 Mss द्वे निःसृता । 7 P यः । 8 Mss -र्धे- । 9 Mss सप्तत्रिंशद्भा- । 10 P -देश्ये- । 11 Mss -राय ...त्तरा या ? 12 Mss -जाऽर्थ- । 13 Mss -पत्यां विजा- । 14 Mss यावन्तो । 15 ...s omit. 16 Mss -खे । 17 P omits. 18 Mss -को । 19 Mss अव्‍ ... चास्य । 20 Mss -ग्ना । 21 B ज्ञयो । P omits it. 22 P -राहो- ।

दिवसं जन्म निर्दिशेद्[1] रात्रौ स्त्रीसंज्ञको भवेत् ।
रात्रिः[2] सन्ध्या समाख्याता[3] भागै[4] रन्यैर्न संशयः ।
पुंसंज्ञादुदयं [5]तेषामहोरात्रान्तिकं वदेत्[6] ॥
अङ्गुष्ठमूले यवके[7] शले सौख्यं विधीयते ।
अश्वाद् भद्रं विजानीयादङ्गुष्ठयवकेष्विह ॥
यवमाला च मत्स्यः स्यादङ्गुष्ठयवको रतौ ।
बालयौवनमध्यान्ते सुखं तस्याभिनिर्दिशेत् ॥
यस्य स्याद् यवक[8] श्चापि चापो वा स्वस्तिकस्तथा ।
तलेषु येषु दृश्यन्ते धन्यास्ते पुरुषा ह्यमी ॥
मत्स्यो धान्यं भवेद् [9]भोगायामिषादौ[10] यवे [11]धनं ।
भोगसौभाग्यं[12] जानीयान् मीनादौ नात्र संशयः ॥
पताकाभिर्ध्वजैर्वापि शक्तिभि[13]स्तोमरैस्तथा ।
तलस्थैरङ्कुशैश्चापि विज्ञेयः पृथिवीपतिः ।
राजवंशप्रसूतं च राजमात्रं[14] विनिर्दिशेत् ॥
प्रेक्ष्यन्ते[15] शाखया पञ्च हस्ते चत्वार[16] एव च ।
क्षत्रियो वा भवेद् भोगी राजभिश्चापि सत्कृतः[17] ॥
वैश्योऽथ क्षत्रियो वाग्मी[18] धन[19]धान्यं न संशयः ।
शूद्रो विपुलभागी स्यात्सार्थशीलोऽथ नैष्ठिकः ॥
सततमभिपूज्यः स्यात् सर्वेषां च प्रियंवदः ।
विशीलः[20] शीलकुञ्जो वा[21] बहुभिर्न बहुस्तथा ॥
श्यामवर्णाऽथ भिन्ना वा सा लेखा दुःखभागिनी ।
त्रिलेखा यस्य[22] दृश्यन्ते[22] यस्य पूर्णाः करस्थिताः[23] ।
महाभोगो महाविद्वान् जीवेद् वर्षशतं च सः ॥

---

1 P -दिशा- । 2 Mss राशि- । 3 Mss समे स्यातां । 4 Mss -रथान्यै- । 5 Mss तेष्वहो- । 6 Mss बंधेत् । 7 Mss -को । 8 Mss -वय- । 9 Mss भोगादा- । 10 P आपि- । 11 B धरं । 12 P -ग्युं । 13 B शालि- । P शारि- । 14 P adds च । 15 B पेक्षिणीं । P पे(ये)क्षणां । 16 Mss चतुर । 17 Mss -तिः । 18 वा भवेद् वाग्मी ? 19 B धनं । 20 Mss -ल । 21 B -कुञ्जे वा । P -संकुञ्जे । 22 P omits. 23 B पूर्णकरस्थितं । P सम्पूर्णकरस्थितं ।

अजपदं राजछत्रं[1] शङ्खचक्रपुरस्कृतं ।
तलेषु यस्य दृश्यन्ते तं विद्यात् पृथिवीपतिं ॥

भगस्तु भाग्याय ध्वजैः[2] पताकैर्हस्त्यश्वमालाङ्कुशतश्च राजा ।
मत्स्यो नु पानाय यवो धनाय वेदिस्तु यज्ञाय गवां च गोष्ठः ॥
अनामिकापर्व[3] अतिक्रमेद् यदि कनिष्ठिका वर्षशतं स जीवति[4] ।
समेत्वशीतिर्वर्षाणि सप्तभिर्यथा नदीनां भरिताय[5] निर्दिशेद् ॥
शरीरवर्णप्रभवां तु लेखां[6] सर्वैशिखां[7] वर्णविहीनकां[8] च ।
समीक्ष्य नीचोत्तममध्यमानां[9] दारिद्र्यमध्ये चरतां विजानतां[10] ॥
अभ्यञ्जनोद्वर्तन[11]सत्करी[पैर]ध्यक्ष[12]चूर्णैश्च विमृज्य पाणिं ।
प्रक्षाल्य चैकान्तरघृष्ट[13]लेखामेकाग्रचित्तस्तु करं परीक्षेत् ॥
वलयसमनराधिपं[14] भजन्त्यः[15] समनुगता मणिबन्धने तु तिस्रः ।
द्विरपि च [स] भवान्तरे महात्मा विपुलधनश्रिय[16] आह वस्त्रलाभः ॥
ददति सततमुन्नतस्तु पाणिर्भवति चिराय तु[17] दीर्घपीनपाणिः ।
परिपतति शिराविरुद्धपाणिर्धनमधिगच्छति मांसगूढ[18]पाणिः ॥
सुदृश[करतलैश्च]साधवस्ते[19] कुटिलकृतैर्विनिमीलितैश्च धूर्ताः ।
भवति रुधिरसन्निभः[20] सुरक्त[21]श्चिरमिह पिण्डितपाणिरीश्वरः स्यात् ॥
धृतरुचिरमनाः[22] शिलारविन्दैर्ज्वलनकषाय[23]सुवर्णपाणिरा[जि]: ।
भवति[24] बहुधनो निगूढपाणिश्चिरा...जीवति [25]पानभोगभोगी ॥
सुभग इह तथोष्णदीर्घपाणिर्ध्रुवमिह शीतलपाणिकस्तु शण्ठः[26] ।
इह हि बहुधनो बलेन युक्तः सुतनु[27]सुसञ्चितपाणिरेखको यः ॥

1 Mss गजपादं गज । 2 Mss -जः पताकाह- । 3 Mss -पर्वमति- । 4 Mss -वेद् । 5 Mss तरिताय । 6 Mss -खा तु लेखा । 7 Mss -कं । 8 Mss -तां । 9 Mss -मायां । 10 P विजानतो । B -ते । 11 Mss -नमत्करी । 12 Mss ध्वक्षु । 13 P -रिघृष्य । B -रिकाघृष्य । 14 Mss वलयः समा नराधिपे । 15 Mss -जन । 16 B धनश्रेयो नु वस्त्र- । P विपुलेधनश्रेया नु वस्त्र- । 17 Mss तद् । 18 Mss -मूढ । 19 Mss सदृशा स धावन्ति । 20 Mss भवन्ति— -भः, भाः । 21 Mss -रुचि- । 22 Mss -मनः । 23 Mss स्वर्ण । 24 Mss -न्ति बहुधना- । 25 B पाणि- । P पाण- । 26 Mss सण्ठः । 27 Mss -वपुः ।

धनमुपनयतीह[1] पाणिलेखा[2] कृतजनिता[3] जलवच्च या[2] सुदीर्घा[2]।
जलवदनुगता[2] सुवर्णवर्णा धनमधिगच्छति[4] निम्नशोन्नता[5] या॥
[6]धनमुपलभते सुरक्तपाणिर्विपुलमथो च[7] निरन्तराङ्गुलिः स्यात्।
बलिपुरुषमपि त्यजेद्धि[8] वित्तं[9] दितविवशा च विशीर्णवर्णलेखा[10]॥
अपगतघृतवर्णपाणिलेखो भवति नरो धनवान् बलेन युक्तः।
[11]असुभृति सदृशा भवेत्तथा[12] [13]भूषणवृत[14][रूपवती शुभा]एकभार्या॥
भवति बहुधनो धनैर्विहीनः श्रुतमधिगम्य, विशालपाणिलेखः।
[सु][15]ऋजुभिरहिनीलनिर्मला[भिः] करतलराजि[भिरीश्वरः स धन्य]:॥
अयं भोः पुष्करसारिन् करतललेखानामाध्यायः।

अथ खलु भोः पुष्करसारिन् वायसरुतं नामाध्यायं व्याख्यास्यामि तच्छ्रूयतां। अथ किं। कथयतु भगवांस्त्रिशङ्कुः। नमोऽर्हतां। तेषां नमस्कृत्वा[16]।

## वायसरुतं

इदं शास्त्रं प्रवक्ष्यामि वायसानां शुभाशुभं।
जयं पराजयं चैव लाभालाभं तथैव च॥
सुखदुःखं प्रियाप्रियं [17]जीवितं मरणं तथा।
वायसानां वचःसिद्धिं[18] प्रवक्ष्यामि यथाविधि
देवाः प्रवदन्ति श्रेष्ठा वायसानां नमो नमः।
आगता मानुषं लोकं वायसा बलिभोजनाः॥
प्रस्थितस्य[19] यदाऽध्वानमग्रतो वायसो भवेत्।
व्याहरन् क्षीरवृक्षस्थो निर्दिशेदर्थसिद्धितां॥
स्वरेण परितुष्टेन फलवृक्षसमाश्रितः।
पुनरागमनं[20] चैव सिद्धमर्थं[21] निवेदितं॥

---

1 Mss omit इह। 2 Mss add ः। 3 Mss -मा। 4 Mss -न्ति। B अनुग-। 5 Mss -न्नताः। They omit या। 6 Mss add सु। 7 Mss -पुलपथा यो। 8 B -षमथ त्यजे। P -मथ त्यजेत्। 9 Mss चित्तचिरं दितविवशविशी-। 10 B -लेखः। P विशीर्णः लेखः। 11 Mss असुतृ (भु)वि॰। 12 Mss भवन्ति। 13 B adds वि। 14 Mss -त्ता। 15 P ऋजुभिमहिनील-। B ऋजुभिर्नील-। 16 =त्य। 17 B adds च, P चैव। 18 Mss वचन-। P -सिद्धं। 19 Mss -तः स। 20 P -ने। 21 B अर्थसिद्धं, P सिद्धिमर्थं।

विवृद्धवृक्षपत्राणि[1] मधुरं चानुवासति ।
असूपं निर्दिशेद् भोज्यं गुडमिश्रं तु गोरसं ॥
दृष्टस्तु[2] तुण्डपादेन आत्मनः परिमार्जति ।
पायसं सर्पिषा मिश्रं तत्र विद्यान्न संशयः ॥
रूक्षं निर्घर्षते तुण्डं शिरश्च परिमार्जति ।
सफलं वृक्षमास्थाय ध्रुवं मांसेन भोजनं ॥
लोचयति व्याहरति फलवृक्षसमाश्रितः ।
व्याधेन च हतं मांसं निवेदयति भोजनं ॥
घोरं व्याहरते कार्यं वायसो वृक्षमाश्रितः ।
कलहं संग्रामभयं[3] तत्र विद्यान्न संशयः ॥
शुष्कवृक्षे निषीदित्वा[4] क्षामं दीनं च व्याहरेत् ।
कलहं सुमहत् कृत्वा न चार्थं तत्र सिध्यति ॥
क्षीरवृक्षे निषीदित्वा[4] क्षामं दीनं च व्याहरेत् ।
क्रमेण युगमात्रेण न चार्थं तत्र सिध्यति ॥
शुष्कवृक्षे निषीदित्वा[4] 'कामुकाकं' प्रवाशति ।
तत्क्षणं सन्निवेदेति[5] तत्र चौरभयं भवेत्[6] ॥
शुष्कवृक्षे निषीदित्वा 'कामुकाकं' प्रवाशति ।
पृष्ठेन दर्शयेद्वारं क्षुधापीडां च निर्दिशेत् ॥
पक्षं विधूयमानो यः पश्यन् पथस्य[7] वाशति ।
न तत्र गमनं कुर्याच्चौरैः पथम् उपद्रुतं ॥
रज्जुं वा[8] फलकं वापि यदि कर्षति वायसः ।
न तत्र गमनं श्रेयश्चौरैः पथमुपद्रुतं ॥
गोमये शुष्ककाष्ठे वा यदि वाशति वायसः ।
कलहः[9] कुवचो[10] व्याधिर्न[11] चार्थं तत्र सिध्यति ॥

---

1 -त्रेषु ? 2 Mss -ष्टं तु । 3 B -फलं । 4 =निषद्य । 5 = -वेदयति । 6 B वदेत् । 7 पथोऽस्य ? 8 B रज्जवः । P -ज्जवा । 9 B -ह । 10 Mss -चनं । Mss read कुवचनं after व्याधि । 11 Mss न ।

तृणं वा यदि वा काष्ठं दर्शयेच्च यदा खगः ।
पुरतः शुष्कपाणिस्तु[1] तत्र चौरभयं भवेत् ॥
सार्थोपरि निषीदित्वा क्षामं दीनं च व्याहरेत् ।
निपतेत् सार्थमध्येऽस्मिन् चौरसैन्यं न संशयः ॥
यदा प्रदक्षिणं त्रस्तं[2] वाशन्ति विविधं खगाः ।
शुष्कवृक्षे निषीदित्वा तत्र विद्यान्महाभयं ॥
भीतस्त्रस्तः परीतश्च यस्तु व्याहरते खगः ।
परिबाधन्[3] दिशः सर्वास्तत्र भयमुपस्थितं ॥
गच्छन्तं समनुगच्छेत्पुरः स्थित्वा तु व्याहरेत् ।
न तत्र गमनं कुर्यान्मार्गमत्र प्रशातनं[4] ॥
वास्तुमध्ये प्रतिस्थाने क्षामं दीनं च व्याहरेत् ।
व्याधिं तत्र विजानीयाद् वासे वा गृहस्वामिनां ॥
शकटस्य यथा शब्दं विश्रब्धं वाशति वायसः ।
दूरादभ्यागतं ज्ञात्वा प्रसिद्धिं चाभिनिर्दिशेत् ॥
गर्गरे घटके चैव स्थालिकपिठरेषु[5] वा ।
निषण्णो वाशते काकः प्रसिद्धं गमनं ध्रुवं ॥
आसने शयने वापि स्थितो वाशति वायसः ।
प्रसिद्धं गमनं ब्रूयात्प्रोषितेन समागमः ॥
ब्रह्मस्थाने निषीदित्वा ध्रुवं वाशति वायसः ।
अर्थलाभं विजानीयाद्धनलाभं च आकरेत्[6] ॥
ब्रह्मस्थाने निषीदित्वा क्षामं दीनं च वाशति ।
सन्धिस्थाने हरेच्चौरस्तत्र वै नास्ति संशयः ॥
देवतादेवतानां च देवस्योपवनानि[7] च ।
यस्य वाचं वदेत्तस्य अर्थलाभं विनिर्दिशेत् ॥
लाक्षाहरिद्रामञ्जिष्ठाहरितालमनःशिला: ।
यस्याहरेत्पुरस्तस्य[8] स्वर्णलाभं विनिर्दिशेत् ॥

1 P -णि तु । 2 Mss शस्त्रं । 3 = -बाधमानः । P -धं । B धे । 4 Mss प्रशाटनं । प्रबाधनं ? 5 B पिटकेषु । P पिठलेषु । It omits वा । 6 Mss -करः । 7 P -स्योयमिव- । 8 P -स्पुरतस्त- ।

पात्रं च पात्रकं चैव मृत्तिकावरभाजनं ।
यस्य यस्य हरेत्तस्य द्रव्यलाभं विनिर्दिशेत् ॥
सङ्गीभूत्वा[1] युगमात्रं शुभं तिष्ठति वायसः ।
काष्ठं वा वायसा यत्र गृहमारोपयन्ति च ।
निगदन्त्यत्र[2] विजानीयाद् याचकात् तु[3] महाभयं ॥
नीलं पीतं लोहितं च प्रतिसंहरणानि[4] च ।
निगृह्णन्ति यत्र काका व्याधिं तत्र विनिर्दिशेत् ॥
ग्रामान्ते भयमाख्याति[5] काको वा वाशति ध्रुवं ।
प्रत्येकतो वा वाशन्ति विद्या[6] तत्र महाभयं ॥
वायसोऽस्थि गृहीत्वा वै[7] प्रगच्छेदनुदक्षिणं ।
निषीदन् सफले वृक्षे स[8] वदेन् मांसभोजनं ॥
यस्य शीर्षे निषीदित्वा कर्णं कर्षति वायसः ।
अभ्यन्तरे सप्तरात्रान्मरणं तस्य निर्दिशेत् ॥
करके चोदके चैव स्निग्धदेशेषु वाशति ।
ऊर्ध्वमुखं निरीक्षन्तु[9] जगद्वृष्टिं विनिर्दिशेत् ॥
स्वरेण परितुष्टेन तीर्थवृक्षेषु वाशति ।
ऊर्ध्वमुखं तथा वक्ति[10] वातवृष्टिं विनिर्दिशेत् ॥
कायं किलकिलायन्तु[11] स्निग्धदेशेषु वाशति ।
वक्षो विधुन्वन्वायसः सद्यो वृष्टिं विनिर्दिशेत् ॥
स्वरेण परितुष्टेन स्निग्धं मधुरं वाशति ।
सक्षरसद्रवं [12]भागं वाशति भोजनं भवेत् ॥
प्राकारे तोरणाग्रे वा यदि वाशति[13] वायसः ।
अभीक्ष्णं घर्षते तुण्डं[14] संग्रामं तत्र निर्दिशेत् ॥
मण्डलानि वावर्तानि बहिर्वा नगरस्य च ।
वैरं च विग्रहं घोरं तत्र चैव विनिर्दिशेत् ॥

---

1 = -भूय । Mss ङ्गी भू- । 2 Mss -दन्यत्र । 3 P -क्रातु । B -कान्त । 4 ? 5 B -तिं । 6 Mss विं- । 7 B वा । 8 B सं- । 9 B -न्ति । 10 B वां- । P वं- । 11 B -न्ति । P किलायन्ति । 12 सक्षारं सद्रवभागं ? 13 P तोरणाग्राणि यदि सेवति । 14 P तुर्णं ।

ग्रामे वा नगरे वापि कुर्वते यत्र मण्डलं ।
ऊर्ध्वमुखं वाशन्तो वै[1] विषण्णत्वं[2] समुत्थितं ॥
पूर्वेण चैव ग्रामस्य यदा सूयति[3] वायसी ।
अल्पोदकेनोत्प्लवन्ति[4] वनानि नगराणि च ॥
पुरस्ताद्दक्षिणे पार्श्वे यदि सूयति वायसी ।
वर्षति प्रथमे मासे पश्चाद्देवो न वर्षति ।
कृष्णधान्यानि वर्धन्ते माषधान्यं विनश्यति ॥
दक्षिणे वृक्षशिखरे[5] यदा[6] सूयतिं वायसी ।
मण्डूककीटक[7] मक्षा[8] चौरश्च[9] बहुलीभवेत्[10] ॥
पश्चिमोत्तरपार्श्वे तु[11] यदा सूयति [12]वायसी ।
मध्यमं च भवेद्वर्षं मध्यशस्यं च जायते ॥
पश्चिमोत्तरपार्श्वे तु यदा सूयति वायसी ।
अशनिर्निपतेत्तत्र भयं च मृगपक्षिणां ॥
उत्तरे वृक्षशिखरे यदा सूयति वायसी ।
पूर्वमुप्तं[13]विजानीयाच्छस्यं समुपजायते ॥
उपरि वृक्षशिखरे यदा सूयति वायसी ।
अल्पोदकं विजानीयात्स्थले बीजानि रोपयेत् ॥
यदा तु मध्ये[14] वृक्षस्य[15] निलयं करोति[16] वायसी[17] ।
मध्यमं वर्षते[18] वर्षं मध्यशस्यं प्रजायते ॥
स्कन्धमूले तु वृक्षस्य यदा सूयति वायसी ।
अनावृष्टिर्भवेद्घोरा दुर्भिक्षं तत्र निर्दिशेत् ॥
चतुरः पञ्च वा पोतान् यदा सूयति वायसी ।
सुभिक्षं च भवेत्तत्र फलानामुदितं भवेत् ॥

---

1 B वा । 2 B -ण्णानां । P -षर्णाना । 3 Wrong reading for सूयते । 4 B -केन चोत्प्लुंति । P -केनरोत्प्लुंति । 5 P -क्षिण शिखरे । 6 B यदि । 7 Mss कटक । 8 Mss मोक्षा । 9 Mss -राश्च । 10 P ब(?)कही भवन्ति । 11 पुरस्तादुत्तरे पार्श्वे ? 12 B य-[ दासू ] -ति । 13 Mss -सप्तं । 14 B -ध्य- । 15 P -क्षेऽस्य । 16 P कुर्वन्ति । 17 P वायसाः । 18 P omits.

अयं भोः पुष्करसारिन् वायसरुतं[1] नामाध्यायः ।

अथ खलु भोः पुष्करसारिन् द्वारलक्षणं नामाध्यायं व्याख्यास्यामि तच्छ्रूयतां । अथ किं । कथयतु भगवांस्त्रिशङ्कुः[2] ।

## द्वारलक्षणं

माहेन्द्रमथ[3] दिव्यं च[4] माङ्गल्यं पूर्वतः[5] स्मृतं ।
दक्षिणे तु दिशो भागे पूषा च पित्र्यमेव च ॥
सुग्रीवं पुष्पदन्तं च[6] पश्चिमेनात्र निर्दिशेत् ।
भल्लातकं[7] राजयक्ष्मं[8] विद्यादुत्तरतः शुभं ॥
जन्मसंपद्विपत्क्षेत्रक्षेमप्रत्यरिसाधनं ।
अथ वै[9] धनमित्रं[10] च परमं[11] मैत्रमेव च ॥
उवाच विधिवत्प्राज्ञो विश्वकर्मा महामतिः ।
वास्तूनां गुणदोषौ[12] च प्रवक्ष्याम्यनुपूर्वशः ॥
समं स्याच्चतुर[13]स्रं[13]च विस्तीर्णा चैव[14] मृत्तिका ।
क्षीरवृक्षाकुलं धन्यं ब्राह्मणस्य प्रशस्यते ॥
पूर्वायतनतया वास्तु रथचक्राकृति[15] च यत्[16] ।
रक्तपांशुर्भवेद्यत्र राज्ञां तत् तु[17] प्रशस्यते ॥
त्रिकोणं कुशसंस्तीर्णमुत्तानं[18] मधुरं[19] च यत्[20] ।
व्यायमतो[21] जलं चैव वास्तु तस्य[22] धनौषधी ॥
[23]अङ्गाराकारसंस्थानं गोमुखं शकटाकृति ।
अनावास्यं[24] च तत्[25] प्रोक्तं[26] यच्च[27] पुत्रक्षयावहं[28] ॥

---

1 B -तं, P -तो । 2 B -को । 3 P -था । 4 P omits. 5 P -त । 6 Mss -न्तश्च । 7 P -ल्लात्तं । B भल्लोक्तं । 8 Mss -मुख्यं (च) । 9 Mss नै- । 10 B व न मित्रं । 11 P -रमि- । 12 P -षं । 13 Mss -स्तम्भं । 14 P -स्त्वैव । 15 P -चक्रातिश्च । B -तिनिश्च । 16 Mss या । 17 Mss सा तु । 18 Mss -ना । 19 Mss -रा । 20 Mss या । 21 P -मतस्यां । 22 Mss तस्या । 23 मृ- ? 24 B अमावस्या । P अनावास्या । 25 Mss सा । 26 Mss -क्ता । 27 Mss यत्र । 28 Mss -वहा ।

यत् तु[1] कञ्जर[2] कक्षैस्तत्[3] त्यक्तं[4] वर्षोदकेन च।
अपसव्योदकं चैव दूरतः परिवर्जयेत् ॥
विप्रस्य चतुरस्रं तु क्षात्रियं परिमण्डलं।
दश द्वादशकं वैश्ये[5] शूद्रस्य तत्र लेखनं[6] ॥
वास्तुपूर्वोत्तरे देशे गोकुलं तत्र कारयेत्।
तथैव चाग्निशालां तु पूर्वदक्षिणतो दिशि ॥
वर्षवृष्या[7] युधागारान्[8] दक्षिणेन निवेशयेत्।
पश्चिमोत्तरतश्चात्र वणिग्भाण्डं निवेशयेत् ॥
उत्तरायां तु कर्तव्यं वर्चः[9] स्थानमनुत्तरं।
ऐशान्यामेव सर्वाणि प्रासादश्च [10]पुरोमुखः[11] ॥
अविधिपरिवर्तेन तत्र [12]वैरं वधो भवेत्।
रचित[13]सर्वद्वाराणामायामो द्विगुणो मतः ॥
कुर्यात्सुरभवनानां यथेष्टं द्वारकाण्यपि।
तद्द्वारबाहुपर्यन्ते स्त्रियो[14] दृष्टा [15]दोषावहाः ॥
विद्विषस्य सलोकस्य[16] द्वारे स्यान्नु करग्रहः[17]।
महेन्द्रे[18] पुरे वा राज्यं[19] सूर्ये[20] सूरप्रभावता[21] ॥
सत्ये[22] मृदुमृगे[23] सूरो[24]न्तरीक्षे धनक्षयः।
वायव्ये तु बहुव्याधिर्भगे[25] भाग्यविपर्ययः[26] ॥
पुष्पे तु सुभगो नित्यं वितथेऽप्यशुभो[27] भवेत्।
शोके[28] भूतविकारः स्यात्[29] सोषे[30] तस्य[31] विषण्णता[32] ॥

---

1 Mss या तु। 2 P कञ्चरु-। 3 Mss सा। 4 Mss -क्ता। 5 B -श्यं। 6 P -षनं। 7 =वरुणे। Mss वर्षवर्षायु-। 8 Mss -धाकारा। 9 Mss ब्रह्म-। 10-11 Mss ततो मुखं। 12 Mss वीर-। 13 Mss -ता। 14 P -या। 15 Mss भवन्ति दोषा वा। 16 विदिक्ष्वस्य सलो-? 17 Mss -ग्रहे। 18 Mss माहेन्द्र। 19 B रात्र्यं। 20 Mss सौर्य। 21 Mss -वतः। 22 Mss -व्ये। 23 Mss मृ-। 24 Mss -रोनन्त-। 25 P omits. B र्भा-। 26 P -युः। 27 Mss भा। 28 Mss -कं। 29 Mss -कारस्य। 30 Mss -थे। 31-32 Mss तस्या विषागता।

भल्लातके गृहे वासो[1] राजयक्ष्मे[2] समावृतिः[3] ।
ह्रदे[4] रैणु[5] परिश्राव[6] आदित्ये तु कलिध्रुवं ॥
नागराजे[7] नागभयं महश्चेद्[8] दीर्घमायुषं[9] ।
भवेदस्य च यद् द्वारं तत्राग्निभयमादिशेत्[10] ॥
क्षयं विद्यात्तस्य तस्य[11] धनस्य[12] च[13] कुलस्य च ।
यमे मृत्युं विजानीयात्कुले[14] श्रेष्ठोत्तमस्य च ।
भृङ्गि[15]राजे तु मतिमान् गन्धर्वे गन्धमाल्यता[16] ॥
भृङ्गे क्रोधः[17] कलिश्चैव पितरि[18] भोगसम्पदः ।
दौवारिके स्वल्पधनं सुग्रीवे राजपूजितः ॥
पुष्पदन्ते धनावाप्तिर्वरुणे जलचित्रता[19] ।
असुरे मरणं घोरं रोगे[20] तु बहुदोषता ॥
बलींश्च[21] उपहारांश्च प्रवक्ष्यामि यथागृहं ।
विचित्रैर्विविदिशैर्गन्धैः परिपूज्य बलिं हरेत् ॥
कलत्रे[22] हेतुबीजानि मध्यमे[23]ऽर्जितमेव[24] तु ।
[25]महेन्द्रे मुक्तपुष्पाणि पावके[26] च पयो दधि ॥
आदित्ये परिदेयं तु भक्तं चैव प्रियङ्गवः ।
अन्तरीक्षे जलं दिव्यं पुष्पाणि जलजानि च ॥
नन्दा प्रतिपदा ज्ञेया षष्ठी त्रयोदशी[27] जया ।
तासु तासु[28] ध्रुवं कुर्यात्प्राज्ञो ह्येवं विचक्षणः ॥

अयं भोः पुष्करसारिन् द्वारलक्षणं[29] नामाध्यायः ।

अथ खलु भोः पुष्करसारिन् द्वादशराशिकं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयतां। अथ किं। कथयतु भगवान् त्रिशङ्कुः ।

---

1 Mss -सत्वाद्। 2 Mss राज्यामुखं। 3 Mss -ता। -त्रृत्तिः ? 4 ? 5 P रणु। 6 Mss -वे। 7 Mss -वासे। 8 ? P मुद्-। 9 Mss -षां। 10 Mss place the 12th line just after this. 11 P omits. 12-13 Mss omit. 14 Mss -लश्रे-। 15 Mss भृङ्ग-। 16 Mss -तां। 17 Mss -ध। 18 Mss पित्तरे। 19 Mss वरुणे जन-। 20 Mss -गं। 21 B वलयः। P नलयं। 22 B -त्र। 23-24 Mss -मार्जित एव तु ( P तमेव )। 25 Mss मा-। 26 Mss -कं। 27 Mss एकादशी-। -ज्ञेयाष्टमी त्रयोदशी- ?? 28 Mss omit. 29 B -ण-।

## द्वादशराशिकः

अतः परं प्रवक्ष्यामि चित्तविज्ञानकाण्डकं[1] ।
यथा दृष्टान्तेनैवैनं[2] नराणां समुदाहृतं ॥
तदहं संप्रवक्ष्यामि चित्तविज्ञानमुत्तमं ।
द्वादशैव तु चित्तास्ते[3] ये[4] लोके प्रत्तरन्ति वै[5] ॥
तानहं संप्रवक्ष्यामि शृणु तत्त्वेन मे ततः ।
द्वादशैव तु कुर्याच्च मण्डलानि विचक्षणः ॥
प्रथमं मेषो[6] नाम स्याद् द्वितीयं तु वृषः[7] स्मृतः ।
तृतीयं मिथुनं नाम चतुर्थं चापि कर्कटः[8] ॥
पञ्चमं चापि सिंहस्तु षष्ठं[9] कन्या इति स्मृतं ।
तुला[10] तु सप्तमं[11] ज्ञेया वृश्चिकस्तु तथाष्टमं ॥
धन्वी तु नवमं[12] ज्ञेया दशमं[13] मकरः स्मृतः ।
कुम्भश्चैकादशं[14] ज्ञेयो द्वादशं[15] मीन उच्यते ॥
होरा शरीरं जातस्य[16] द्वितीये चिन्तितं धनं ।
तृतीये[17] भ्रातरश्चैव चतुर्थे[18] स्वजनस्तथा ॥
चिन्त्यते पञ्चमे पुत्रः षष्ठे मण्डले[19] शत्रुता ।
सप्तमे [20]दारसंयोगो[21] ह्यष्टमे नैधनं[22] स्मृतं ॥
नवमे चिन्त्यते धर्मो दशमे कर्मजं फलं ।
एकादशे [23]चार्थलाभो द्वादशे व्यर्थसंभवः ॥
एते द्वादशचित्तास्तु यथा दृष्टा महर्षिभिः ।
सर्वभूतात्मभूताश्च[24] यथाज्ञेयास्त देहिनां ॥

---

1 Mss करण्डकं । 2 Mss -न्ते चैवै- । 3 P स्तु । 4 P य । 5 P तु । 6 Mss -ष- । 7 P -षं । 8 P -टं । 9 P -ष्ठः । 10 P -लस्तु । 11 B -मी । P -मे (मं?) । 12 B -मी- । P -मे (मं?) । 13 P मे (मं?) । 14 B -शो । P शे (शं) । 15 P शे (शं) । B शो । 16 प्रथमे चिन्तितमायुः ? 17 Mss -यं । P भ्रातरं । 18 B -र्थं । 19 Mss -लिश- । 20 B द्वार- । 21 P -योगा । 22 B निधनं । 23 P नार्थलाभं । 24 -भूतैश्च ?

आगत्य पृच्छते कश्चित् प्रथमं मण्डलं स्पृशेत् ।
शिरस्तु स्पृशते यश्च शब्दश्च उपलक्ष्यते[1] ॥
व्याधितं चैव ह्यात्मानमाग्नेयाश्च विनष्टयः[2] ।
यदि ब्रूयात्तदा तस्य आत्मार्थं चिन्तितं[3] भवेत्[4] ॥
काञ्चनं रजतं ताम्रं लौहं चैव भृशं भवेत्[5] ।
स च[6] सर्वगतश्चैव अग्निरश्नाति निश्चितं ॥
एतादृशं [7]दृष्ट्वोत्पातमाग्नेयं तस्य निर्दिशेत् ।
यादृशश्च[8] भवेन् छब्द[9] स्तादृशं तेन चिन्तितं ॥
पुरुषः कश्चिदागत्य द्वितीयं मण्डलं स्पृशेत् ।
ग्रीवां वा परिमार्जयेद् गलं च चिबुकं पुनः ॥
यदि शब्दश्च श्रूयेत दृष्ट्वा[10]गावस्तथैव च ।
ईदृशं च[11] दृष्ट्वोत्पातं गोशब्दं तत्र निर्दिशेत् ।
अथ वा यादृशः[12] शब्द[13]स्तादृशं तेन चिन्तितं ॥
पुरुषः कश्चिदागत्य तृतीयं मण्डलं स्पृशेत् ।
मार्जयेन्मुखदेशं तु स्त्रीचित्तं तस्य निर्दिशेत् ॥
अथ शब्दो[14] भवेत्तत्र श्रूयन्तां[15] तादृशास्तु[16] ते ।
जातं[17] प्रजातमुपजातं[18] तथा जातो भविष्यति ॥
एतादृशं दृष्ट्वोत्पातं[19] गर्भं [20]तस्य विनिर्दिशेत् ।
अथ वा यादृशः[21] शब्द[22]स्तादृशं तेन चिन्तितं ॥
पुरुषः कश्चिदागत्य चतुर्थं मण्डलं स्पृशेत् ।
कच्छपं[23] स्पृशते यस्तु कलहं तत्र निर्दिशेत् ।
स्वजन[24]व्यवहारस्तु सति कलहे न संशयः[25] ॥

---

1 Mss -क्षयेत् ( शब्दं च उपलक्षयेत् ? ) । 2 Mss -ग्नेयोथ । P सिनष्टयः । विनष्टी याः ? 3 Mss -तो । 4 B वदेत् । 5 B वदेत् । P भवेद् भृशं । 6 P सर । 7 B -ष्टो- । P ष्टा- । 8 Mss -शं च (तु) । 9 Mss -ब्दं । 10 P -ष्टो । 11 P omits. 12 Mss -शं । 13 Mss -ब्दं । 14 Mss वा शब्दं । 15 Mss श्रूयतां । 16 Mss -शं तु । 17 P -त । 18 P -जोतं । 19 P -ष्टात्पातं । 20 न हि तस्यात्मनोऽपि तु भार्यायाः । 21 Mss -शं । 22 B -ब्दं । P omits. 23 Mss -वः । कचपं ? 24 P व्यवहृवस्तु । 25 "If there is quarrel there will be a contest at law with kinsmen".

आकट्टा[1] कट्टेति शब्दा भवन्ति च निरन्तरं ।
एतादृशं दृष्ट्वो[2] त्पातं कलहं तत्र निर्दिशेत् ॥
पुरुषः कश्चिदागत्य पञ्चमं मण्डलं स्पृशेत् ।
हृदयं स्पृशते यस्तु अपत्यं तत्र चिन्तितं ॥
प्रवासकश्च विज्ञेयः परग्रामगतो मृतः ।
शस्त्रद्रव्यं[3] च यत्तस्य ब्राह्मणानां कुले स्थितं ॥
अथ शब्दो भवेत्तत्र यं दृष्ट्वा तु महर्षिभिः ।
पुत्रपुत्रेति यच्छब्दो[4] यद्गतं गतमेव च ।
एतादृशं दृष्ट्वोत्पातं[2] मरणं तत्र निर्दिशेत् ॥
पुरुषः कश्चिदागत्य षष्ठं तु मण्डलं स्पृशेत् ।
स्पृशते चापि पार्श्वानि गात्रचिन्ता तु चिन्तिता ॥
विग्रहस्तु[5] महाघोरः शत्रुश्चापि प्रवध्यते[6] ।
अथ वा तत्र ये शब्दाः श्रोतव्यास्ते न संशयः ॥
अयं तु प्रक्षरश्चैव हतश्च विहतस्तथा ।
एतादृशं दृष्ट्वो[2] त्पातमरिविग्रहमादिशेत् ।
अथ वा यादृशः शब्दस्तादृशं तेन चिन्तितं ॥
पुरुषः कश्चिदागत्य सप्तमं मण्डलं स्पृशेत् ।
हस्तेन मर्दयेद् हस्तं तथा नाडीं[7] च मर्दयेद्[8] ॥
निवेशचिन्ता विज्ञेया अन्यग्रामगता[9] भवेत् ।
तत्रेमे भवन्ति शब्दाः श्रोतव्या भूमिमिच्छता ॥
स्थितं निविष्टं वर्त[10]श्च कृतं हस्तगतं तथा ।
एतादृशं दृष्ट्वोत्पातं[11] निवेशं[12] तस्य निर्दिशेत् ।
यादृशो[13] वा श्रुतः[14] शब्द[15]स्तादृशं तेन चिन्तितं ॥

---

1 P -ट्ट- । 2 P -ष्टो- । 3 नष्टं द्रव्यं ? 4 Mss -ब्दं । 5 B -हस्ते । P -हस्तेन । 6 P वध्यते, B प्रगृह्य- । 7 P नाडी (डीः ?) । 8 P मर्दति । 9 Mss -तं । 10 वर्तश्च ? or वर्तनं ? 11 P -ष्टो- । 12 Mss -विष्टं । 13 Mss -शं । 14 Mss -तं । 15 Mss -ब्दं ता ।

पुरुषः कश्चिदागत्य अष्टमं मण्डलं स्पृशेत् ।
उदरं चैव फिचकं द्वे इमे[1] परिमार्जयेत् ॥
निधनं दृश्यते तस्य[2] मरणं चापि दृश्यते ।
यदि भवेद् भवेन्मृत्युर्यश्चान्यप्रियसङ्गमः[3] ॥
तत्रेमे शब्दाः[4] श्रोतव्या मृत[5] एव भविष्यति ।
एतादृशं दृष्ट्वोत्पातं व्यापत्तिं तस्य निर्दिशेत् ॥
पुरुषः कश्चिदागत्य नवमं मण्डलं स्पृशेत् ।
ऊरुं च स्पृशते भूया धर्मचिन्ता च चिन्तिता ॥
तत्र शब्दाश्च श्रोतव्या भवन्ति हि न संशयः ।
यज हि[6] याजकश्चैव यजमान[7] स्तथैव च ।
शब्दानेवंविधान् श्रुत्वा यज्ञचिन्तां[8] तु निर्दिशेत् ॥
पुरुषः कश्चिदागत्य[9] दशमं मण्डलं स्पृशेत् ।
[10]कर्मचिन्ता विचिन्त्येति[11] गृहकर्म न संशयः ॥
स्पृशते जानुनी चैव कर्मचिन्तां[12] तु निर्दिशेत् ।
तत्र शब्दा भवन्तीमे श्रोतव्याश्च न संशयः ॥
भूमिकर्म च क्षेत्रं च क्षेत्रकर्म तथैव च ।
एतादृशं दृष्ट्वोत्पातं[13] कर्मचिन्तां[14] विनिर्दिशेत् ॥
[15]पुरुषः कश्चिदागत्य एकादशं तु संस्पृशेत् ।
जङ्घे तु स्पृशते भूयो ह्यर्थलाभं विनिर्दिशेत् ॥
तत्रेमे शब्दाः श्रोतव्या भवन्तीह[16] न संशयः ।
पण[17]सुवर्णचेलानि धान्यं[18] समणिकुण्डलं[19] ॥
एतादृशं रवं श्रुत्वा हिरण्यं तस्य[20] निर्दिशेत् ।
अथ वा यादृशः[21] शब्द[22]स्तादृशं फलमादिशेत् ॥

---

1 P द्वामे च । B द्वाविव । 2 B तत्र । 3 -न्योऽप्रिय- ? 4 P adds तु । 5 Mss -तमे- । 6 Mss -जाहि । 7 Mss -नं । 8 Mss -न्ता । 9 Mss कश्चित्पुरुष- । 10 Mss धर्म- । 11 P -न्तेति । 12 Mss -न्ता । 13 P -ष्टो- । 14 Mss -न्ता । 15 Mss कश्चित्पुरुष आ- । 16 P omits इह । 17 Mss पनं । 18 Mss -न्याः । 19 Mss -लाः । 20 B तत्र । 21 Mss -शं । 22 Mss -ब्दं ता- ।

पुरुषः कश्चिदागत्य द्वादशं मण्डलं स्पृशेत् ।
पादौ च स्पृशते पृच्छन् चित्तं चाप्यनर्थिकं[1] ॥
यस्तु तच्चिन्तितो[2] ह्यर्थ आशा आगन्तुका च या ।
अथ वा शब्दाः श्रोतव्या निमित्तज्ञानपारगैः ॥
निराशश्चैव घोषश्च निराशं तस्य निर्दिशेत् ।
अथ वा यादृशः शब्दस्तादृशं तेन चिन्तितं ॥

अयं भोः पुष्करसारिन् द्वादशराशिको नामाध्यायः ।

अथ खलु[3] भोः पुष्करसारिन् कन्यालक्षणं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयतां । अथ किं । कथयतु भगवांस्त्रिशङ्कुः ॥

## कन्यालक्षणं

तत्त्वं विज्ञायते येन येन शुभमुपस्थितं ।
निन्दितं च प्रशस्तं च स्त्रीणां वक्ष्यामि लक्षणं ॥
पितरं मातरं चैव मातुलं भ्रातरं तथा ।
विम्बाद्विम्बं परीक्षेत त्रिशङ्कुवचनं यथा ॥
मुहूर्ते तिथिसम्पन्ने नक्षत्रे चापि पूजिते ।
तद्विज्ञैः सह सङ्गम्य कन्यां पश्येत शास्त्रवित् ॥
हस्तौ पादौ निरीक्षेत नखानि ह्यङ्गुलीस्तथा[4] ।
पाणिलेखाश्च[5] जङ्घे च कटिं[6] नाभ्यूरुमेव च ॥
ओष्ठौ जिह्वां च दन्तांश्च कपोलौ नासिकां तथा ।
अक्षिभ्रुवौ ललाटं च कर्णौ केशांस्तथैव च ॥

---

1 B वाप्य- । P वाव्य- । 2 B यच्चिन्तिते । P याचिन्तिते । 3 B omits.
4 Mss नखान्यङ्गुलयस्तथा । 5 P -खा च । 6 P -टी ।

रोमराजीं स्वरं वर्णं मन्त्रितं गतिमेव च ।
मतिं सत्त्वं समीक्षेत कन्यानां शास्त्रकोविदः ।
तत्र पूर्वं परीक्षेत स्वयमेव विचक्षणः ॥
हंसस्वरा मेघवर्णा नारी मधुरलोचना ।
अष्टौ पुत्रान् प्रसूयेत दासीदासैः[1] समावृता ॥
[2]व्यावर्ताश्चत्वारो[3] यस्याः सर्वे चैव प्रदक्षिणाः ।
सम[4] गात्रविभक्ताङ्गी पुत्रानष्टौ प्रसूयते ॥
मण्डूककुक्षिर्या नारी सैश्वर्यमधिगच्छति ।
धन्यान्सा[5] जनये[6] त्पुत्रांस्तेषां प्रीतिं च भुञ्जते ॥
यस्याः पाणितले व्यक्तः कच्छपः स्वस्तिको ध्वजः
अङ्कुशं कुण्डलं माला दृश्यन्ते सुप्रतिष्ठिताः ।
एकं सा जनयेत्पुत्रं तं च राजानमादिशेत् ॥
यस्याः पाणौ प्रदृश्येत कोष्ठागारं सतोरणं ।
अपि दासकुले जाता राजपत्नी भविष्यति ॥
द्वात्रिंशद्दशना यस्याः सर्वे गोक्षीरपाण्डराः ।
समशिखरि[7] स्निग्धाभा[8] राजानं सा प्रसूयते ॥
स्निग्धा कारण्डवप्रेक्षा[9] हरिणाक्षी तनुत्वचा ।
रक्तोष्ठजिह्वा सुमुखी राजानमुपतिष्ठति ॥
सूक्ष्मा च तुङ्गनासा च[10] मुक्तमारक्तिमोदरी[11] ।
सुभ्रूः सुवरकेशान्ता सा तु कन्या बहुप्रजा ॥
अङ्गुल्यः संहिताः कान्ता नखाः कमलसन्निभाः ।
सुभ्रजुरक्तचरणा सा कन्या सुखमेधते ॥
यस्यावर्तौ समौ स्निग्धौ उभौ पार्श्वौ सुसंस्थितौ ।
... ... ... राजपत्नी तु सा भवेत्[12] ॥

---

1 B दास- । 2 Mss वा । आ ? 3 Mss -तुरो । 4 B समं । 5 P omits सा । 6 P जनयते । 7 B शिखर, P omits the *pāda*. 8 Mss या । 9 Mss कोरण्डकप्रक्षा । 10 P तु । 11 P मुक्तचोदरी । B -मारक्तमो- । मुक्तिकारक्तिमोदरी ? 12 P places this *śloka* after the following two.

प्रदक्षिणं प्रक्रमेत प्रेक्षते च प्रदक्षिणं।
प्रदक्षिणसमाचारां[1] कन्यां[2] भार्यार्थमावहेत् ॥
ऊरू जङ्घे च पार्श्वे च तथा विक्रमः[3] संस्थितः[4] ।
रक्तान्ते विपुले नेत्रे सा कन्या सुखमेधते ॥
मृगाक्षी मृगजङ्घा च मृगग्रीवा मृगोदरी।
युक्तनामा तु या नारी राजानमुपतिष्ठते ॥
यस्याप्रललिताः केशा मुखं[5] च परिमण्डलं।
नाभिः प्रदक्षिणावर्ता[6] सा कन्या कुलवर्धिनी ॥
नातिदीर्घा नातिह्रस्वा सुप्रतिष्ठतनुत्वचा।
सुखसंस्पर्शकेशाग्रा सौभाग्यं नातिवर्तते ॥
कान्तजिह्वा तु या नारी रक्तोष्ठी प्रियभाषिणी।
तादृशीं वरयेत्प्राज्ञो गृहार्थं सुखमेधिनीं ॥
नीलोत्पलसुवर्णाभा दीर्घाङ्गुलि[7] तला तु या[7] ।
सहस्राणां बहूनां तु स्वामिनी सा भविष्यति ॥
धनधान्यैः समायुक्तां[8] आयुषा यशसा श्रिया।
कन्यां[9] लक्षणसम्पन्नां[10] प्राप्य वर्धति मानवः ॥
कीर्तितास्तु मया धन्या मङ्गल्यलक्षणाः स्त्रियः।
अप्रशस्तं प्रवक्ष्यामि यथोद्देशेन लक्षणं ॥
ऊर्ध्वप्रेक्षी[11] अधःप्रेक्षी[11] या च तिर्यक् च प्रेक्षिणी।
उद्भ्रान्ता विपुलाक्षी च वर्जनीया विचक्षणैः ॥
भिन्नाग्रशतिका रूक्षाः केशा यस्याः प्रलम्बिकाः।
चित्रावली चित्रगात्रा[12] भवति[13] कामचारिणी ॥
कामुका पिङ्गला चैव गौरी चैवातिकालिका[14] ।
अतिदीर्घा अतिह्रस्वा वर्जनीया विचक्षणैः ॥

---

1 Mss -रा। 2 Mss -न्या। 3 Mss -म। 4 Mss -संस्थितौ। 5 Mss मुखे। cf. below. 6 P -र्तो। 7 Mss -तलपरया। 8 Mss -क्ता। 9 B -न्या। 10 B -न्ना। 11 =प्रेक्षा। 12 P -गात्रैर्। 13 B भवन्ती। 14 P -लिनी।

यस्यास्त्रीणि प्रलम्बन्ति ललाटमुदरं[1] स्फिचौ।
त्रींश्च[2] सा पुरुषान् हन्ति देवरं श्वशुरं पतिं॥
पार्श्वतो रोमराजी तु विनता च कटिर्भवेत्।
दीर्घमायुरवाप्नोति दीर्घकालं च दुःखिता॥
काकजङ्घा च या नारी रक्ताक्षी घर्घरस्वरा।
निःसुखा च निराशा च वर्जिता नष्टबान्धवा॥
अतिस्थूलोदरं[3] यस्याः प्रलम्बो निम्नसन्निभः।
अत्यन्तमवशा नारी बहुपुत्रा सुदुःखिता॥
या तु सर्वसमाचारा मृद्वङ्गी समतां गता।
सर्वैः समैर्गुणैर्युक्ता विज्ञेया कामचारिणी॥
यस्या रोमचिते जङ्घे मुखं च परिमण्डलं।
पुत्रं वा भ्रातरं वापि जारमिच्छति तादृशी॥
यस्या बाहुप्रकोष्ठौ द्वौ[4] रोमराजीसमावृतौ[5]।
उत्तरोष्ठे च रोमाणि सा तु भक्षयते पतिं॥
यस्य हस्तौ च पादौ च छिद्रौ दन्तान्तराणि च।
पतिनोपार्जितं द्रव्यं न तस्या रमते गृहे॥
यस्यास्तु व्रजमानायाः स्फुटन्ते पर्वसन्धयः।
सा ज्ञेया दुःखबहुला सुखं नैवाधिगच्छति॥
यस्याः कनिष्ठिका पादे भूमिं न स्पृशतेऽङ्गुलिः।
कौमारं सा पतिं त्यक्त्वा आत्मनः कुरुते प्रियं॥
[6]अनामाङ्गुलिः पादस्य महीं न स्पृशतेऽङ्गुलिः।
न सा रमति कौमारं[7] बन्धकीत्वेन जीवति[8]॥
यस्याः प्रदेशिनी पादेऽङ्गुष्ठं समतिक्रमेत्।
कुमारी कुरुते जारं यौवनस्था[9] विशेषतः॥

---

1 Mss -रस्फि-। 2 P त्रयः। 3 Mss -दरो। 4 Mss -कोष्ठे द्वे। 5 Mss -ते। 6 Mss अनामिका-। 7 P -रे। 8 B द्वितीयं लभते पतिं। B omits the following two verses. 9 P यौवस्था।

आवर्तः पृष्ठतो यस्या नाभी सा चानुबन्धति ।
न सा रमति कौमारं द्वितीयं लभते पतिं ॥
विकृता स्थिरजाला च [1]रूक्षगण्डशिरोरुहा ।
अपि राजकुले जाता दासीत्वमधिगच्छति ॥
यस्यास्तु हसमानाया गण्डे जायति कूपकं ।
अग्निकार्येऽपि[2] सा गत्वा क्षिप्रं दोषं करिष्यति ॥
समासमगता[3] सुभ्रू गण्डावर्ता च या भवेत् ।
प्रलम्बोष्ठी तु या नारी नैकत्र रमते चिरं ॥
लम्बोदरी स्थूलशिरा रक्ताक्षी पिङ्गलानना ।
अष्टौ भक्षयते वीरान्नवमे तिष्ठते चिरं ॥
न देविका न नदिका न च दैवतनामिका[4] ।
वृक्षगुल्मसनामा[5] च वर्जनीया विचक्षणैः ॥
नक्षत्रनामा या नारी या च गोत्रसनामिका[6] ।
सुगुप्ता रक्षिता वापि मनसा पापमाचरेत् ॥
दारान् विवर्जयेदेतान् या मया परिकीर्तिताः ।
प्रशस्ता यास्तु पूर्वोक्ता[7] स्तादृशीया[8] न्नरः सदा ॥

पद्माङ्कुशस्वस्तिकवर्धमानैश्चक्रध्वजाभ्यां कलशेन पाणौ ।
शङ्खातपत्रोत्तमलक्षणैश्च सम्पत्तये साधु भवन्ति कन्याः ॥

अयं भोः पुष्करसारिन् कन्यालक्षणं[9] नामाध्यायः ।

अथ खलु भोः पुष्करसारिन् वस्त्राध्यायं व्याख्यास्यामि । तच्छ्रूयतां । अथ किं । कथयतु भगवान् त्रिशङ्कुः ॥

1 B वृक्ष-, P रक्ष- । 2 Mss -र्यापि । 3 B समाप्त ( or स )मगता । 4 Mss देवमना- । 5 Mss -समाना । 6 B समानिका । 7 Mss -क्ता ता- । 8 -शो (:) इयात् ( प्राप्त्यर्थे इ -लिङ् ) । 9 Mss -णो ।

## वस्त्राध्यायः

कृत्तिकासु दहत्यग्निरर्थलाभाय[1] रोहिणी ।
मृगशिरा[2] मूषीदंशा[3] आर्द्रा प्राणविनाशिनी ॥
पुनर्वसुश्च धन्या स्यात्पुष्ये वै वस्त्रवान् भवेत् ।
अश्लेषासु भवेन्मोषः[4] श्मशानं मघया व्रजेत् ॥
फाल्गुनीसु[5] भवेद् विद्या उत्तरासु च वस्त्रवान् ।
हस्तासु[6] हस्तकर्माणि चित्रायां गमनं ध्रुवं ॥
स्वात्यां च शोभनं वस्त्रं विशाखा प्रियदर्शनं[7] ।
बहुवस्त्रा[8] चानुराधा ज्येष्ठा वस्त्रविनाशिनी[9] ॥
मूलेन क्लेदयेद्वास[10] आषाढा रोगसम्भवा[11] ।
उत्तरा मृष्टभोजी[12] स्याच्छ्रवणे[13] चक्षुषो रुजं ॥
धनिष्ठा धान्यबहुला विंद्याच्छतभिषे भयं ।
पूर्वभाद्रपदे तोयं पुत्रलाभाय[14] चोत्तरा ॥
रेवती धनलाभाय अश्विनी वस्त्रलाभदा[15] ।
भरणी च[16] भयाकीर्णा[17] चौरगम्या[18] च सा[19] भवेत् ॥

अयं भोः पुष्करसारिन् वस्त्राध्यायः ।

अथ खलु भोः पुष्करसारिन् लुङ्गाध्यायं प्रवक्ष्यामि । तच्छ्रूयतां । अथ किं । कथयतु भगवान् त्रिशङ्कुः ॥

---

1 Mss -भं तु । 2 P -रे । 3 B मूषिका- । P मुषिका- । 4 Mss अश्लेषा तु भवेन्मोषं । 5 Mss तु । 6 Mss -स्ता स्याद् हस्व- । 7 =करोतीति । 8 Mss -स्त्रं । 9 P -शनं । 10 Mss क्लेशयेद्वासं । 11 P -वः । 12 उत्तरासु मृष्टभोजी ? 13 Mss -णा । 14 Mss -भं तु । 15 P -न्ये वस्त्रलाभं स्यात् । 16 P -षु । 17 P -र्णं । 18 P -म्यं । 19 P तद् ।

## लुङ्गाध्यायः

कुत्रोत्पन्ना इमे बीजाः (?) शस्यानां च यवादयः ।
यैरिदं ध्रियते विश्वं कृत्स्नं स्थावरजङ्गमं ॥
वापयेत् तु कथं बीजं लाङ्गलं योजयेत्कथं ।
केषु नक्षत्रयोगेषु तिथियोगेषु केषु[1] च ॥
शारदं वाथ[2] ग्रैष्मं[3] तु कस्मिन्मासे तु वापयेत् ।
निमित्तं[4] कति शस्यन्ते कानि वा परिवर्जयेत् ।
कस्य वा दापयेद् धूपं केन मन्त्रेण [5]दापयेत् ॥
प्रदक्षिणसमावृत्ता यदि लुङ्गा प्रजायते ।
तदा नागमुखी लुङ्गा दहति चित्रमुख्यपि[6] ॥
दर्भसूचीमुखी वापि कारणं तत्र को भवेत् ।
कति सौभिक्षिका [7]लुङ्गाः कति [8]दौर्भिक्षिकाः स्मृताः[9] ।
कति वर्णाः समाख्याताः कति वर्णा निदर्शिताः ॥
[10]नष्टापनष्टबीजस्य[11] वर्षति यदि वासवः ।
निर्घातो वा भवेत्तीव्रोऽथवापि मेदिनी चलेत् ॥
शस्यं फलस्य किं तत्र निमित्तमुपलक्षयेत् ।
सर्वमेतत्समासेन श्रोतुमिच्छामि तत्त्वतः ॥

पुष्करसारिणो ब्राह्मणस्य वचनं श्रुत्वा त्रिशङ्कुर्मातङ्गाधिपतिरिदं वचनमब्रवीत् ।

पुरा देवासुरर्नागैर्यक्षराक्षसकिन्नरैः ।
सागरादमृतं दृष्टं[12] मन्थिते तु समुद्भवं ॥

1 P omits. 2 P omits अथ । 3 P ग्री- । 4 P -त्तानि । 5 Mss वा- । 6 P -खीपि वा । 7 P रुङ्गा । B लुङ्गा । 8 P दुर्भिक्षिका । B दौर्भिक्षिका । 9 B -ता । 10 P नष्टो- । 11 Mss -ष्टाद् बी । 12 B गृह्यं ।

अमृते भक्ष्यमाणे[1] तु भागं[2] प्रार्थितवान् द्विजः[3] ।
ततो दत्ताः सुरैर्भागा[4] अमृताद्दशविन्दवः ॥
तत उत्पन्ना इमे बीजा भुवि लोकसुखावहाः ।
यवव्रीहितिलाश्चैव गोधूमा मुद्गमाषकाः ॥
श्यामकं[5] सप्तमं विद्यादिक्षुश्चाष्टमकः स्मृतः[6] ।
शेषास्तु[7] सङ्गता जाता बहवः शस्यजातयः ॥
हरितकेषु सर्वेषु[8] ये चान्ये [9]सत्त्वजातयः ।
परितो नवमो विन्दुः सर्वदेहेऽमृतोऽभवत्[10] ।
मूलेषु चैव सर्वेषु विन्दुरेकः प्रपातितः ॥
आषाढे शुक्लपक्षेऽस्य व्रीहिधान्यानि वापयेत् ।
शारदादीनि सर्वाणि मासे भाद्रपदे तथा ॥
कार्त्तिके मार्गशीर्षे वा[11] ग्रीष्म[12]धान्यानि वापयेत् ।
पञ्चम्यां शुक्लसप्तम्यां षष्ठ्यामेकादशीषु च ॥
त्रयोदश्यां द्वितीयायां तथा हि नवमीषु च ।
विशेषतस्तु निम्नेषु सर्वबीजानि[13] ह्युत्सृजेत्[14] ॥
भरणी[15]पुष्यमूलेषु[16] हस्ताश्विनीमघासु च ।
कृत्तिकासु विशाखासु विशेषेण तु शारदं ॥
सौम्ये[17] मैत्रेऽनुराधे च धनिष्ठाश्रवणासु च ।
उत्सर्गः[18] सर्वबीजानामुत्तरेषु प्रशस्यते ।
वर्जयेज्जन्मनक्षत्रं संग्रहं च विवर्जयेत् ॥
ग्रामक्षेत्रे च [19]यद् बीजं गृहे[20] च[20] गृहदेवता ।
निमित्तमुपलक्षेत मङ्गलानि शुभानि[20] च ॥

---

1 Mss भक्ष- । 2 B -गः । P -गोः । 3 Mss -जैः । 4 B -गममृतं द- । P -गममृता द- । 5 Mss सा- । 6 Mss -कं स्मृतं । 7 Mss -षा स (सु ?) । 8 P omits. 9 सत्य- ? 10 B भवः । P -वाः । 11 P च । 12 P -ष्मे । 13 P -बीजा । 14 Mss समु- । The reading was probably -जान् समुत्सृ- । 15 P रोहिण्यां । 16 P -तु । 17 P -मे । 18 Mss -र्गं । 19 Mss यं बी- । 20 P omits.

ब्राह्मणं क्षत्रियं[1] कन्यामर्चिष्मन्तं च पावकं ।
वारणेन्द्रं वृषं चैव हयं वा स्वभ्यलंकृतं ॥
पुर्णकुम्भं ध्वजं छत्रमाममांसं सुरां तथा ।
उद्धृतां[2] धारणीं[3] चैव बद्धमेकपशुं दधि ॥
चक्रारूढं च शकटं काकारूढां च सूकरीं ।
परस्यारोपणं दृष्ट्वा सस्यसम्पत्तिमादिशेत् ॥
सर्वे दक्षिणतो धन्याः पुरश्च मृगपक्षिणः ।
दर्शनं शुक्लपुष्पाणां फलानां चैव शस्यते ॥
अजो वा[4] वामतः शस्यो[5] जम्बुकश्च प्रशस्यते ।
विकृतं कुब्जकुष्ठि [6]च मुखं श्मश्रुधरं तथा ॥
नरं[7] निर्भर्त्सितं दीनं शोकार्तं[8] व्याधिपीडितं ।
वराहवृन्दं सर्पं च गर्दभं भारहीनकं ।
दृष्ट्वा निवर्तयेद् बीजं पुनर्ग्रामं प्रवेशयेत् ॥
तिलस्य बहु(?) पूर्णस्य भाण्डे स्याद्वपनं[9] तथा[10] ।
श्रुत्वा ह्येतानि व्रजतां सस्यसम्पत्तिमादिशेत् ॥
राशिस्थं[11] ग्रथितं धौतं स्वस्थ[12]मंकुरितं तथा ।
श्रुत्वा संमार्जितं चैव इत्याशुकृतिनं विदुः ॥
श्रुत्वा म्लानं च शुष्कं[13] च[13] मन्दवृष्टिं[14] च निर्दिशेत् ।
श्रुत्वा निवर्तयेद् बीजं पुनर्ग्रामं प्रवेशयेत् ॥
नीयमानं च यद् बीजं वर्षते यदि वासवः ।
स्वयमेव तु[15] तच्छस्यं कामं कालेन[16] भुज्यते ॥
नीयमानं च [17]यद् बीजं कम्पते यदि[18] मेदिनी[18] ।
भ्रम्यते[18] कर्षकः स्थानान्न[19] तच्छक्यं तु वापितुं ॥

---

1 P पार्थिवं । 2 Mss -ता । 3 B -णी । P धरणीं । 4 P omits. 5 B -स्यं । P सर्वं । 6 -छिनौ ? 7 Mss नखं ( नस्वं or निःस्वं ) । 8 B -काढ्यं, P -कार्थं । 9 P द्विपरं । 10 ? 11 Mss -तं । 12 Mss स्वस्त- । 13 P omits. 14 Mss वृन्द- । 15 P omits. 16 P adds here तु । 17 P omits च य । 18 P omits. 19 B स्थानानान्यच्छक्यं, P स्थानान्तान्यच्छ- ।

नीयमानस्य बीजस्य निर्घातो दारुणो भवेत् ।
स्वामिनो मरणं क्षिप्रं शस्यपालस्य निर्दिशेत् ॥
अथ वा व्याकुलं कुर्याद्राजदण्ड[1] निकृन्तति ।
दृष्ट्वा निवर्तयेद् बीजं पुनर्ग्रामं निवेशयेत् ॥
ब्राह्मणेभ्यो यथाशक्ति दत्वा तु संप्रयोजयेत् ।
कृत्वा सुविपुलां वेदीं दर्भानास्तीर्य सर्वतः ॥
समिद्भिरग्निं प्रज्वाल्य जुहुयाद् घृतसर्षपं ।
[2]वेदशान्तिं जपेत्पूर्वं शस्यशान्तिमतः परं ॥
जपेत्पाराशरं पूर्वं प्रियतां वाचयेद् द्विजैः[3] ।
प्रथमं प्राङ्मुखं बीजं प्रक्षिपेदुत्तरेऽथ वा ॥
पिपीलिका यदा क्षेत्रे बीजं कुर्वन्ति सञ्चयं ।
सुवृष्टिं च सुभिक्षं च सर्व[4] सस्येषु सम्पदा[5] ॥
हरन्ति चेत् तृणाद् बीजं तृणे[6] शस्यापहा अपि[7] ।
परस्परं च हिंसन्ति धान्यं च निधनं व्रजेत् ॥
स्थलेषु सञ्चयं दृष्ट्वा महावृष्टिं विनिर्दिशेत् ।
दृष्ट्वा तु[8] सञ्चयं निम्नेऽनावृष्टिं च निर्दिशेत्[9] ॥
यदा तु प्रोषितं बीजं सप्तरात्रेण जायते ।
सुवृष्टिं च सुभिक्षं च सर्वशस्येषु सम्पदा[5] ॥
यदा तु प्रोषितं बीजमर्धमासेन जायते ।
अल्पं निष्पद्यते शस्यं दुर्भिक्षं चात्र जायते ॥
त्रिरात्राच्चतूरात्राद्वा यदि लुङ्गः प्रजायते ।
अतिवृष्टिर्भवेत्तत्र परचक्रभयं विदुः ॥
लुङ्गस्य तु ये पादाः पञ्च सप्त नवा[10] तथा ।
सुवृष्टिं च सुभिक्षं च सर्वसस्येषु सम्पदा[5] ॥

---

1 Mss -ण्डं । 2 देव- ? 3 B -जः । 4 P omits. 5 = -दः । 6-7 B भ्रूणेष्वपि शस्यापहा । P त्रूणे...हा । 8 P omits. 9 B omits this sentence. 10 =नव ?

स्याल्लुङ्गस्य तु ये पादाश्चत्वारोष्टपदाथ वा।
अल्पं निष्पद्यते शस्यं दुर्भिक्षं नात्र निर्दिशेत्॥
लुङ्गस्य यदि पादास्तु दृश्यन्ते द्वादश क्वचित्।
क्वचिन्निष्पद्यते शस्यं दुर्भिक्षं क्वचिदादिशेत्।
वामावर्ताः प्रदृश्यन्ते दुर्भिक्षं तत्र निर्दिशेत्॥
यदा पूर्वमूखो[1] लुङ्गा क्षेमं वृष्टिं च निर्दिशेत्।
यदा पश्चान्मुखो लुङ्गा अतिवृष्टिं च निर्दिशेत्॥
क्षेमं सुभिक्षं चैवात्र यदा लुङ्गोत्तरामुखी।
हरितालसुवर्णाभा भद्रशोचि[2] रिवोत्थिता॥
दर्भसूचीमुखी चापि दृश्यते यत्र कुत्रचित्।
क्वचिन्निष्पद्यते शस्यं दुर्भिक्षं तत्र निर्दिशेत्॥
यदा[3] नागमुखो लुङ्गा दृश्यने[4] यत्र वा क्वचित्।
क्वचिन्निष्पद्यते शस्यं दुर्भिक्षं चात्र निर्दिशेत्।
[5]तत्राशनिभयं चापि भयं मेघान्न संशयः॥
कृषिमूलमिदं सर्वं त्रैलोक्यं सचराचरं।
नास्ति कृषिसमावृत्तिः स्वयमुक्तं स्वयम्भुवा॥
नाकृषेर्धर्ममाप्नोति नाकृषेः सुखमाप्नुयात्।
धर्ममर्थं तथा कामं सर्वं प्राप्नोति कर्षकः॥

इति लुङ्गाध्यायः॥

पुनरपि पुष्करसारी ब्राह्मणस्त्रिशङ्कुं मातङ्गाधिपतिमेतदवोचत्।

---

1 Mss पूर्वामु-। 2 Mss -सूचि। 3 Mss तदा। 4 Mss -न्ते। 5 Mss दत्ता-। दन्ता-?

कथं पृथिव्यां नागाश्च केन वा विनिवारिताः ।
कुतो मूलसमुत्थानं निर्घातः[1] कुत्र जायते ॥
कुतश्चा[2] भ्राणि जायन्ते नानावर्णा दिशो दश ।
कस्यैष महतः शब्दः श्रूयते दुन्दुभि[3] स्वरः ॥
को हि सृजति दुर्भिक्षं सुभिक्षं चैव प्राणिनां ।
[4]कस्तत्र स मुनिश्रेष्ठो[5] नाम गोत्रं ब्रवीहि मे ॥
दैवतानि[6] च मे ब्रूहि विधानानि स्वयम्भुवः ।
यज्ञं च यज्ञभागं[7] च होतव्यश्च[8] यथा बलिः[9] ॥
पृथिव्यां दैवतं ब्रूहि आश्रमे दैवतं ब्रूहि ।
देवे तु दैवतं[10] ब्रूहि केन देवो सा[11] कल्पिता ॥
पात्रस्य दैवतं[12] ब्रूहि पूर्णकुम्भस्य दैवतं[12] ।
करके दैवतं ब्रूहि तथा स्थाल्यां च दैवतं ॥
शस्यस्य दैवतं[12] ब्रूहि शस्यपालस्य[13] दैवतं[14] ।
वायुस्कन्धैश्च[15] कतिभिः शुक्रो[16] वेगं प्रमुञ्चति ॥

अथ त्रिशङ्कुर्मातङ्गाधिपतिर्ब्राह्मणं पुष्करसारिणमेतदवोचत् ।

पृथ्वी वा वायुराकाशमापो ज्योतिश्च पञ्चमं ।
तत्र संवर्तते पिण्डं ततो मेघः प्रवर्तते ॥
एष [17]व्याप्नोति चाकाशं वायुना जन्यते घनः ।
आदित्यरश्मयो वारि समुद्रस्य नभस्तले[18] ॥
तज्जलं नागसंक्षिप्तं ततो वरुणसंक्षयः[19] ।
वायुर्नभो गर्जयते अग्निर्विद्योतते[20] दिशः ॥

---

1 Mss -तं । 2 P omits च । 3 Mss -भिः स्व- । 4 Mss का त- । 5 Mss मनीश्रेष्ठा । 6 Mss दे- । 7 P -ण्डं । 8 Mss -व्यं च । 9 P -लिं । 10 Mss दे- । 11 Mss परिकल्पिता । 12 Mss दे- । 13 Mss -नस्य । 14 Mss दे- । 15 P -स्तु । 16 Mss -क- । 17 B -क चां- । 18 आकर्षन्तीति बोद्धव्यं । 19 Mss -यं । 20 P omits अग्नि- ।

मरुता[1] क्षिप्यते पिण्डं सन्निपातश्च गर्जते ।
विरोधनं तु वायोश्च[2] अग्नेश्च[3] अनिलस्य च ॥
आकाशे वर्तते पिण्डं पश्चात्पतति मेदिनीं ।
यद् ग्रहाणामधिपतिर्नक्षत्रज्योतिषामपि ।
ततो मारुतसंसर्गात्पर्जन्यमपि वर्षति ॥
वर्षते शैलशिखरे यत्र संप्रस्थितो जनः ।
यत्र सत्यं च धर्मश्च[4] हविर्मेघश्च वर्तते ॥
तत्र बीजानि रोहन्ति अन्नपानं समृध्यति ।
एवं[5] पिण्डाशनिराद्या[6] ततो वाताशनी[7] स्मृता[8] ।
दन्ताशनी तृतीया तु अशनिस्तु[9] चतुर्थिका ॥
पञ्चमी[10] क्रिमयः प्रोक्ताः षष्ठी तु शलभास्तथा ।
सप्तमी[11] स्यादनावृष्टि[12]रतिवृष्टि[13]स्तथाष्टमी ॥
नवमी सम्बरः[14] प्रोक्ता इत्याह भगवांस्त्रिशङ्कुः ।
एतास्त्वशन्यो व्याख्यातास्तासां वै देवताः शृणु ।
पिण्डाशनी[15] ब्रह्मसृष्टा एषा ज्येष्ठाद्यदेवता[16] ॥
दन्ताशनी तु सैन्यानां[17] ग्रहा वाताशनी स्मृता[18] ।
अदेश ... ... देवताः ॥
शलभाः केतुदैवत्या[19] आदित्या[20] दितिदेवताः[21] ।
संसकाम्[22] अतिवर्षस्य अनावृष्टेस्तु ज्योति[षः][23] ॥

[सम्ब]रस्य[24] तु पर्जन्यमाख्याताः नव[25] देवताः[25] । अशन्या देवताः[26] प्रोक्ता आकाशगमनार्थं बोधत ।

पूर्वमथीन्द्रदैवत्य[27] दक्षिणे यमदैवतं[27] ।

---

1 B मारुतः । P मारुता । 2 P -स्तु । 3 P omits अ- । 4 Mss -र्मं च । 5 Mss एक । 6 Mss -ण्डाशरीरार्था । 7 B वाशतौनिः । 8 B तथा । 9 P -श्व । 10 Mss -माः । 11 Mss -मा । 12 Mss स्यंदना- । 13 P omits अति- । 14 B संव- । 15 P -शवी । 16 Mss -द्यशेषता । 17 B -न्यां न्यां । 18 P -ताः । 19 Mss -दे- । 20 Mss add श्व । 21 P दिति पश्यति शवः । 22 ? 23 B ज्योत्स्ना... । 24 ? 25 P omits. 26 B अशन्य- । अशन्यो- ? 27 P देव- ।

वरुणं पश्चिमे विद्यादुत्तरे धनदः स्मृतः ।
...त्या दैवतं विष्णुराश्रमं विश्वदैवतं[1] ॥
[2]समिधादैवता[3] दैवास्तेभ्यो दैवी प्रकल्पिता ।
समिधा[4] दैवता ... ... [5]तोग्निहुताशनं ॥
वेद्यां तु दैवतं ... ... कारादित्यदैवतं ।
पात्रस्य दैवता धर्मः पूर्णकुम्भे जनार्दनः ॥
चरुं चेति ... . ... [6]धूपस्थानस्य ज्योतिषः ।
शस्य ... ... शस्यपालो[7] महामतिः ।
वायुस्कन्धैश्चतुर्भिस्तु शुक्रो[8] वेगं प्रमुञ्चति ॥
अत्र मध्ये पृथिव्याप आश्रमो विश्वदैवतः[9] ।
तस्मिन् देशे ... ... यस्मिन् प्रीतो वृषध्वजः ॥

इत्याह भगवांस्त्रिशङ्कुः । पुनरपि पुष्करसारी ब्राह्मणस्त्रिशङ्कुमेवमाह ।

किमर्थमाश्रमे नित्यं हूयते हव्यवाहनः ।
तृणकाष्ठानि संहृत्य मेघं दृष्ट्वा समुत्थितं ॥
अति... ... न्यते अग्नि [10]सुदारुणं ।
सर्वलोकहितार्थाय ध्यात्वा दिव्येन चक्षुषा ।
प्रशमेच्च समासेन तद्भवार्थं तु ... ॥

एवमुक्ते त्रिशङ्कुर्मातङ्गाधिपतिर्ब्राह्मणं पुष्करसारिणमेतदवोचत् ।

---

1 Mss विष्णु- ( see below ). 2 Mss सविद्या- ( सुविद्या ? )। 3 B -तं। P omits it. 4 Mss -धाद्। 5 B omits तो। 6 P omits धू। 7 Mss -ने। 8 Mss -क्क-। 9 B -तं। 10 P omits सु।

# धूमिकाध्यायः

पुरा हि खाण्डवद्वीपमर्जुनेन महात्मना ।
... ... ... ज्वलितं जातवेदसा ॥
... ... ... प्रसन्नमानाग्निधिगतं[1] ।
तत्र दग्धा अनेका हि[2] नागाः[3] कोटीसहस्रशः ॥
पुरा महोरगगणा[4] यक्षराक्षसपन्नगाः[5] ।
पादहीनाः कृताः केचिद् बाहुहीनाः कृतापरे ॥
वैकल्यं कर्णनासाभ्यां कृतं चैवाक्षिपातनं ।
तदाप्रभृति भूतानां[6] दृष्टं[7] वै त्रासितं मनः ॥
अग्निना तापिताः केचिद्बाणैरन्ये च[8] सूदिताः ।
वाचाटकेनापि पुरा काद्रवेयाः प्रपातिताः ॥
आचषा हविर्गन्धेन मुह्यमाना नभोन्तरे ।
तद्विहीनाः[9] पतन्त्यन्ये गुह्यका धरणीतले ॥
सहाम्पतिस्तु[10] नाम्ना स[11] शस्यकाले तदा[12]श्रमे ।
शस्यपालैस्तु सततं होतव्यो हव्यवाहनः ॥
गृहमेधी[13] ज्वालयेदग्निं निर्मलेऽपि नभोन्तरे ।
दिग्भागेषु च भूतानां तेषामर्थं दिने दिने ॥
जाग्रतं[14] सततं वह्निमाश्रमस्थोऽपि धारयेत् ।
मेघं दृष्ट्वा विशेषेण ज्वालितव्यो हुताशनः ॥
सधूमं ज्वलितं दृष्ट्वा दीप्यमानं तु पावकं ।
भयमापतते तेषां नागसैन्यं विमुह्यते ॥
अग्निं परिचरतोऽस्य[15] शस्यपालस्य चाश्रमे[16] ।
अग्निना हूयमानेन सिध्यते[17] सर्वकर्म च[18] ॥

अयं भोः पुष्करसारिन् धूमिकाध्यायः ॥

अथ खलु भोः पुष्करसारिन् तिथिकर्मनिर्देशं नामाध्यायं व्याख्यास्यामि । तच्छ्रूयतां । अथ किं । कथयतु भगवांस्त्रिशङ्कुः ।

---

1 ? 2 Mss -ग्धान्यनेकानि । 3 Mss -ग । 4 Mss -गणः । 5 B -गैः । 6 B भूपा- । 7 Mss -ष्ट्वा । 8 Mss -न्योन्यसू- । 9 पद्-विहीनाः ? 10 Cf. Pali सहम्पति । 11 Mss नामेन । 12 P स- । 13 Mss हृद्दे मेधी । 14 Mss -न्तं । 15 Mss -चरन्तस्य । 16 B omits श्रमे । 17 Mss -न्ते । 18 Mss -र्मणः ।

# तिथिकर्मनिर्देशः

नन्दां प्रतिपदामाहुः[1] प्रशस्तां सर्वकर्मसु ।
विज्ञानस्य समारम्भे प्रवासे च विगर्हिता[2] ॥
द्वितीया कथिता भद्रा शस्ता भूषणकर्मसु ।
जया[3] तृतीया व्याख्याता[4] प्रशस्ता जयकर्मसु[5] ॥
चतुर्थी कथिता रिक्ता ग्रामसैन्यवधे हिता ।
चौर्याभिचारकूटाग्निदाहगोरससाधने[6] ॥
पूर्णा तु पञ्चमी ज्ञेया चिकित्सागमनाध्वसु[7] ।
दानाध्ययनशिल्पेषु व्यायामे च प्रशस्यते ॥
जयेति[8] संज्ञिता षष्ठी गर्हिताऽध्वसु शस्यते[9] ।
गृहे[10] क्षेत्रे[11] विवाहे[12] वाऽवाहकर्मसु मित्रेति[13] ॥
भद्रा[14] च[14] सप्तमी ख्याता श्रेष्ठा सा सौकृतेऽध्वनि[15] ।
नृपाणां शासने[16] छत्रे[17] शय्यानां करणेषु च ॥
महाबलाष्टमी सा च प्रयोज्या परिरक्षणे ।
भय[18]मन्दरबद्धेषु योगेषु हरणेषु च ॥
उग्रसेना तु नवमी तस्यां कुर्याद्रिपुक्षयं ।
तथा विषघ्नावस्कन्द[19]विद्याबन्धवधक्रियाः[20] ॥
सुधर्मा दशमी शस्ता[21] शास्त्रारम्भे धनोद्यते[22] ।
शान्तिस्वस्त्ययनारम्भे[23] दानयज्ञोद्यतेषु च ॥
एकादशी पुनर्मान्या स्त्रीषु च मांसमद्ययोः ।
कारयेन्नगरं[24] गुप्तं[25] विवाहं [26]शास्त्रकर्म च ॥
यशेति[27] द्वादशीमाहुर्वैरेऽध्वनि च गर्हिता ।
विवाहे[28] च गिरौ क्षेत्रे गृहकर्मसु पूजिता ॥

---

1 B नन्दामाहुः प्रतिपदां । 2 Mss विग्रहिता । 3 P चला । 4 B कथिता । 5 P चलक- । 6 Mss -नं । 7 P गमने- । 8 B अशिति । P अशितिसंज्ञा- । नन्देति ? 9 P वै प्रश- । B प्रश- । 10 Mss -हृ- । 11 Mss -त्र । 12 Mss -हृ । 13 B मित्रता । 14 Mss omit. 15 Mss -नौ । 16 Mss -नं । 17 Mss -त्रं । 18 B भयं । भये मण्डलबन्धेषु ? 19 Mss -न्ध- । 20 Mss -या । 21 P omits, B शान्ता । सुनन्दा दशमी शस्ता ? 22 Mss -ता । 23 Mss -म्भा । 24 B -रे । P -र । 25 Mss -प्ता । 26 P -हशास्त्र- । 27 भद्रेति ? 28 P -है गिरि च क्षे- ।

जया त्रयोदशी साध्वी मण्डलेषु[1] च योषितां ।
कन्यावरणवाणिज्यविवाहादिषु चेष्यते[2] ॥
उग्रा चतुर्दशी तु स्यात्कारयेदभिचारकं[3] ।
वधबन्ध[4] प्रयोगांश्च पूर्वं च प्रहरेदपि ॥
सिद्धा पञ्चदशी साध्वी देवताग्निविधौ हिता ।
गोसंग्रहवृषोत्सर्गबलिजप्यव्रतेषु च[5] ॥
नन्दादीनां क्रिया[6] पूर्वं षष्ठ्यादीनां तु मध्यमे ।
सुनन्दायाश्च[7] संध्याभि[8] र्दिनरात्र्योः प्रसिध्यति ॥

अयं भोः पुष्करसारिन् तिथिकर्मनिर्देशो नामाध्यायः ।*

अपि च महाब्राह्मण इदं[9] पूर्वनिवासानुस्मृतिज्ञानसाक्षात्क्रियायां विद्यायां चित्तमभिनिर्णयामि[10] निवर्तयामि । अनेकविधपूर्वनिवासं समनुस्मरामि ।

स्यात्ते ब्राह्मण कांक्षा वा विमतिर्वा अन्यः स तेन कालेन तेन समयेन ब्रह्मा देवानां प्रवरो[11]ऽभूत् । नह्येवं द्रष्टव्यं । अहमेव स तेन[12] कालेन[12] तेन समयेन ब्रह्मा देवानां प्रवरोऽभूवं । सोऽहं ततश्च्युतः समान[13] इन्द्रः कौशिकोऽभूवं[14] । ततश्च्युतः समानो[15]ऽरणेमि[16]र्गौतमोऽभूवं । ततश्च्युतः समानः[17] श्वेतकेतुर्नाम महर्षिरभूवं । ततश्च्युतः समानः[18] शुकपण्डितोऽभूवं । मया ते तदा ब्राह्मण चत्वारो वेदा विभक्ताः[19] ।

---

1 Mss -लेन । P साधुः म- । 2 Mss -क्षते । 3 P -रुकं । 4 Mss -न्धन- । 5 P वा । 6 P स्त्रिया, B स्त्रियां । 7 Mss -न्दाय्याश्र । 8 Mss सायाभि( =सायैः ? ) । * Translations omit ( from उत्पातचक्राध्यायः to ) तिथिकर्मनिर्देशो नामाध्यायः । 9 Mss -यं । 10 B -निर्णेया- । P निर्नमे( or ने )या- । Ch read only the following sentence. 11 Mss परमो । 12 P omits. 13 Tib देवानां । 14 Tib शतक्रतुर- । 15 Tib ब्राह्मण । 16 Mss -मी गौ- । 17 Tib omits. 18 Tib *tha. mal. ba'i.* =सामान्यः । 19 Tib : वाचिता or पठिता । Ch[2] omits this paragraph. Ch[1] reads : "When Puṣkara-sārin heard this speech, he was so glad as he was never before. He said to Triśaṅku, 'Well, Blessed One, what Your Holiness has said is quite true. I wonder what you did in the past, that you have such wisdom and eloquence ! What good deeds you did, what merits you acquired ( in former life ), kindly explain those to me !' Triśaṅku said, 'I remember my former lives. Once I was Brahmā, then I became Indra. Afterwards I was Śuka Ṛṣi. I divided the Vedas into four divisions ( see notes )' ".

तद्यथा पुष्यो[1] बह्वृचानां[2] पंक्ति[3]श्छन्दोगानां । एकविंशतिचरणा[4] अध्वर्यवः । क्रतुरथर्वणिकानां[5] । स्यात्तव ब्राह्मण काङ्क्षा वा विमतिर्वा अन्यः स तेन कालेन तेन समयेन वसुर्नाम महर्षिरभूत् । न ह्येवं द्रष्टव्यं । अहमेव स तेन कालेन तेन[6] समयेन वसुर्नाम महर्षिरभूवं । मया सा तक्षकवधूकायाः[7] कपिला नाम माणविका[8] दुहिताऽसादिता भार्यार्थाय । सोऽहं तत्र संरक्तचित्त श्रद्धया भ्रष्टो ध्यानेभ्यो[9] वञ्चितः परिहीनः[10] । सोऽहमात्मानं जुगुप्समानस्तस्यां वेलायामिमां गाथां बभाषे[11] । ओं भूर्भुवः स्वः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः[12] प्रचोदयात्[13] ।

सोऽहं ब्राह्मण त्वां ब्रवीमि[14] सामान्यसंज्ञा[15]मात्रकमिदं लोकस्य ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र[16] इति वा[16] । एकमेवेदं सर्वं सर्वमिदमेकं[17] । पुत्राय मे शार्दूलकर्णाय प्रकृतिं दुहितरमनुप्रयच्छ भार्यार्थाय । यावतकं कुल[18]शुल्कं मन्यसे तावतकमनुप्रदास्यामि । इदं च वचनं पुनः श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी इदमवोचत् ।

भगवान् श्रोत्रियः श्रेष्ठस्त्वत्तो[19] भूयान्न[20] विद्यते[21] ।
सदेवकेषु लोकेषु महाब्रह्मा[22]समो भवान्[23] ॥

---

1 Mss -ष्य । 2 Tib *gnod. pa'i. chogs* (Dege : *phyogs*). 3 Mss यच्छन्दक्षी । Tib *gnod. pa'i. phyogs*. 4 B वरणे अथर्वणां । P चरणे अथवणां । 5 Tib omits this sentence. 1-5 Ch omit. Ch[1] continues : "For hundred thousand *kalpas*, I was *Cakravartin* king. I had such glory and wealth. At that time I cultivated *maitrī*, *karuṇā*, *dhyāna-samādhi*, *prajñā*. I enlightened the sentient beings and made them practise Buddha's *Dharma*. 6 P omits. 7 Tib तक्षकस्य । Ch[2] "of my father-in-law." 8 Mss मान- । Tib & Ch[2] omit. 9-10 Ch[2] omits. 11 B अभाषत । 12 B -निं । P -नि । 13 Ch[2] omits the सावित्री । 14 B ब्रवीमि त्वां ब्राह्मण । 15 B omits संज्ञा । 16 P omits. 17 Ch[2] omits. 18 Tib omits. 19 Mss add अन्यो । 20 B भूयोथ । P -यार्थ । 21 Ch[2] भगवान् सर्वेषु श्रेष्ठस्तत्समश्च न विद्यते । Tib : *khyod. ni. gcig. tu. gyur. pa'i. gtso. bo. mñam. pa. med. pa* = "In blending into one uniform state, you are the best ( or एकीभावे भवान् श्रेष्ठः ) you are unequalled or matchless". 22 B ब्रह्म । P omits it. 23 Ch[2] "like the highly learned Brahmā". Tib : "like the unequalled great Brahmā ( *lit.* Brāhmaṇa )" 14-23 Ch[1] omits.

पुत्राय ते भोः[1] प्रकृतिं [2]ददामि
शीलेन रूपेण गुणैरुपेतः[3] ।
शार्दूलकर्णः प्रकृतिस्तु भद्रा
उभौ रमेतां रुचितं ममेदं[4] ॥

तत्र[5] तानि पञ्चमात्राणि[6] माणवकशतानि[7] उच्चैः[8] शब्दानि[9] प्रोचुर्महाशब्दानि । मा त्वं भो उपाध्याय विद्यमानेषु[10] ब्राह्मणेषु चाण्डालेन सार्धं सम्बन्धं रोचय[11] । नार्हसि[12] भो उपाध्याय विद्यमानेषु[13] ब्राह्मणेषु चाण्डालेन[14] सार्धं सम्बन्धं कर्तुम्[15] ।

अथ ब्राह्मणः पुष्करसारी तेषां निदानं निदाय[16] शब्दं[17] संस्थाप्य[17] निपत्य[17] श्लोकेनैतानर्थानभाषत[18] ।

एवमेतद्यथा ह्येष त्रिशङ्कुर्भाषते गिरं ।
तत्त्वं[19] ह्यवितथं भूतं सत्यं नित्यं तथा ध्रुवं[20] ॥

---

1 Mss एहि त्वं भोः। Tib & Ch² पुत्राय ते । 2 Tib & Ch² add: दुहितरं । 3 Mss -तां । 4 Tib reads : शीलेन रूपेण गुणैरुपेतौ शार्दूलकर्णः प्रकृतिस्तथोभौ । भद्रौ च सौम्यौ च रुचितं ममेदं । Ch² omits this *śloka*. 1-4 Ch¹ omits. 5 Ch² तत्र पुष्करसारिणो ब्राह्मणस्य । 6 Ch² omits, it adds असन्तुष्टाः । 7 Ch² omits शतानि । 8-9 Tib omits. 10 Tib विद्वत्सु । 11 Tib कुरु । Mss add माक्षयसि । 12 Tib omits. 13 Tib त्रैविद्येषु विद्वत्सु । 14 P omits. 15 P -र्तुमि । B adds इच्छामि । Tib किं करिष्यसि । 6-15 Ch² मा मा उपाध्याय ! विद्यमानेषु त्रिषु उच्चवर्णेषु कथं पवित्रो ब्राह्मणो जघन्येन चण्डालेन सार्धं सम्बन्धमिच्छति । After this it adds : " 'It is wrong.' The disciples laughed at him". 16 Tib व्याख्याय । 17 Tib omits. 18 Ch² reads this sentence as : "Then Puṣkara-sārin exhorting his disciples spoke this". 5-18 Ch¹ omits. 19 Mss तत्र तथा । 20 Ch¹ reads this *śloka* as : "You are good and benevolent. Whatever you say is true and sincere." Ch² reads the second line as : "Most sincere and true ( अवितथ )" । It adds : "I shall marry my daughter to your son".

अथ ब्राह्मणः पुष्करसारी तेषां [1]माणवकानां तं महान्तं शब्दं संस्थाप्य[2] त्रिशङ्कुं मातङ्गराजमिदमवोचत्[3] । अयं भोस्त्रिशङ्को ब्रह्मणा सहापतिना[4] चातुर्महाभौतिको[5] महापुरुषः प्रज्ञप्तः । यस्य :

शिरः सतारं गगनमाकाशमुदरं तथा ।
पर्वताश्चाप्युभावूरू पादौ च[6] धरणीतलं[7] ॥
सूर्याचन्द्रमसौ नेत्रे रोम तृणवनस्पती ।
सागराश्चाप्यमेध्यं वै[8] नद्यो मूत्रस्रवो[9] ऽस्य तु ॥
अश्रूणि वर्षणं चास्य एष ब्रह्मा सहापतिः[10] ।
भवांस्तु[11] परमज्ञो[12]ऽसि तन्मे ब्रूहि यथा तथा[13] ॥

इह भोस्त्रिशङ्को किमाह स्वलक्षणं ब्रह्मणः प्रत्यवेक्षस्व[14] । पित्रा च मात्रा च कृतानि कर्माणि भवन्ति । अश्वस्तना[15]स्तेन वञ्चिताः[16] ।

गच्छन्ति सत्त्वा बहुगर्भयोनिं न चैव कश्चिन्मनुजो ह्ययोनिः[17] ।
समस्त[18]जातौ प्रचरन्ति सत्त्वा न मारुता[19]ज्जायते कश्चिदेव ॥
स्वभावभाव्यं ह्यवगच्छ लोके के ब्राह्मणक्षत्रियवैश्यशूद्राः ।
सर्वत्र काणाः कुणिनश्च[20] खञ्जाः कुष्ठी किलासी[21] ह्यपस्मारिणोपि ॥

---

1 P मान- । 2 Tib -सारी तान् माणवकान् निर्भर्त्स्य । 3 $Ch_2$ -सारी त्रिशंकुं मातङ्ग... । 4 Cf. Pali सहम्पति । 5 P भूतिक । 6-7 Mss प्रतिछितौ । 8 Mss स्यात् । 9 Mss -श्रवा- । 10 Tib असह- । 11 Mss भवस्तु । 12 B -मो ज्ञेयस्तन्मे । P -मो ज्ञेयनतमे । Tib "Matchless, wise one!" 1-13 Ch¹ omits this passage. 14 Tib : इह भोस्त्रिशङ्को यच्च ( or किमपि ) मया उच्यते स्वलक्षणं प्रत्य- । Ch² reads this sentence as : अथ मातङ्गराजः पुष्करसारिणं श्लोकेनाह । 15 Mss पिता च ( माता ) च कृतेन कर्मणा भवन्ति । अश्वोदन तेन- । 16 Tib सुखार्थिनो वञ्चिताः । Ch² reads : पित्रा च मात्रा च कृतानि कर्माणि ( *lit.* पापपुण्यानि ) भवन्ति रागवासनातृष्णालक्षणानि सुखकराणि । Ch¹ omits these three sentences. 17 Mss -जो निजः(B श्च) । Ch² स्वतः प्रसूतः । Tib न चैव कश्चिदजोऽस्ति । 18 Mss सर्व- । 19 B मारुतो । P न॰मा × मोर्य । 20 B -षिणश्च । P -षिन- । 21 B -शी । P omits सी । 16-21 Ch¹ omits. Ch² translates them almost literally.

कृष्णाश्च गौराश्च तथैव श्यामाः सत्त्वाः प्रजा ह्यन्यतमे विशिष्टाः[1] ।
सहास्थिचर्माः सनखाः समांसा दुःखी सुखी मूत्रपुरीषयुक्ताः ।
न चेन्द्रियाणां प्रविविक्तिरस्ति[2] तस्मान्न वर्णाश्चतुरो[3] भवन्ति ॥

मन्त्रैर्हि यदि लभ्येत स्वर्गं[4] तु गमनं[4] द्विजः ।
कृष्णशुक्लानि कर्माणि भवेयुर्निष्फलानि हि[5] ।
यस्मात्कृष्णानि शुक्लानि कर्माणि सफलानि हि ।
पच्यमानानि दृश्यन्ते गतिष्वेतानि पञ्चसु[6] ॥

माणवकशतेषु[7] स तत्र विनिहतो[8] महायशसा त्रिशङ्कुना[9] पुष्करसारी ब्राह्मणोऽब्रवीत्[10] । ब्राह्मणोऽसौ मातङ्गराजो हि त्रिशङ्कुर्नाम[11] । भवान् हि ब्रह्मा[12] इन्द्रश्च कौशिकः । त्वमरणेमिश्च[13] गौतमः । त्वं श्वेतकेतुश्च शुकपण्डितः । वेदः[14] समाख्यातस्त्वया चतुर्धा[15] । भगवान्वसू[16]राजर्षि[17]र्महायशा भगवान्[18] ।

ज्ञानेन हि[19] त्वं परमेण युक्तः सर्वेषु शास्त्रेषु भवान्[20] कृतार्थः ।
श्रेष्ठो विशिष्टो परमोऽसि लोके भवान् हि विद्याचरणेन युक्तः[21] ॥
ददामि तेऽहं प्रकृतिं ममामलां[22] शीलेन रूपेण गुणैरुपेतः[23] ।
शार्दूलकर्णः प्रकृतिश्च भद्रा उभौ रमेतां रुचितं ममेदं[24] ॥

---

1 Mss -मते प्रविष्टाः । Ch² सत्त्वा हि सर्वे विषमा विशिष्टाः । 2 =प्रविभक्ति- । 3 W. r. for चत्वारो । 1-3 Ch¹ omits these three lines. Ch² translates them almost literally. 4 B अंगतो गगनं- । P simply अं गगनं- । 5 B omits. 6 Ch omit these two verses. 7 Tib omits. 8 P वै नि- । 7-9 Tib: "Then the renowned Triśaṅku, the king of the Caṇḍālas put an end to the controversy". Ch² is not clear. 10 Ch² adds : "After having received with reverence the teachings of the Mātaṅgarāja". 11 Tib & Ch² omit this sentence. 12 Mss भगवान् हि ब्राह्मण । 13 B -मी च । Ch² omits this sentence. 14 Mss देव । 15 Tib omits. 16 Mss वसु । 17 Tib & Ch² महर्षि- । 7-18 Ch¹ omits. 19 Mss omit हि त्वं । 20 Mss भगवान् । Tib reads this *pāda* : ( भवान् ) सर्वशास्त्रकृत् । 21 Mss भवन्ति विज्ञाश्चरणेन युक्ताः । Tib ( भवान् ) विद्वान् । 22 Mss त्वमामलं । 23 Mss -र्तां । 19-24 Ch¹ omits.

प्रगृह्य [1]भृङ्गारमुदकप्रपूर्णमावर्जितो[2] ब्राह्मणो हृष्टचित्तः[3] ।
अनुप्रदासीदुदकेन कन्यकां शार्दूलकर्णस्य इयमस्तु भार्या ॥
उदग्रचित्त आसीन्मातङ्गराजः ।
कृत्वा निवेशं स तदात्मजस्य गत्वाश्रमे[4] ऽसौ नगरं यशस्वी[5] ।
धर्मेण वै[6] कारयति[7] स्वराज्यं क्षेमं सुभिक्षं च सदोत्सवाद्यं[8] ॥ इति ।

स्याद् भिक्षवो युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा। अन्यः स तेन कालेन तेन समयेन त्रिशङ्कुर्नाम मातङ्गराजोऽभूत्। नैवं द्रष्टव्यं। अहमेव स तेन कालेन तेन समयेन त्रिशङ्कुर्नाम मातङ्गराजोऽभूवं। स्यादेवं च भिक्षवो युस्माकमन्यः स तेन कालेन तेन समयेन शार्दूलकर्णो नाम मातङ्गराजकुमारोऽभूत्। नैव द्रष्टव्यं। एष स आनन्दो भिक्षुः स तेन कालेन तेन समयेन शार्दूलकर्णो नाम मातङ्गराजकुमारोऽभूत्। स्यादेवं युष्माकमन्यः स तेन कालेन तेन समयेन पुष्करसारी नाम ब्राह्मणोऽभूत्[9]। नैव द्रष्टव्यं[10]। एष शारद्वतीपुत्रो भिक्षुः स तेन कालेन तेन समयेन पुष्करसारी नाम ब्राह्मणोऽभूत्[11]। नान्या सा तेन कालेन तेन समयेन पुष्करसारिणो ब्राह्मणस्य प्रकृतिर्नाम [12]माणविका दुहिताभूत्। नैवं द्रष्टव्यं। एषा सा प्रकृतिर्भिक्षुणी तेन कालेन तेन समयेन पुष्करसारिणो ब्राह्मणस्य प्रकृति[12]र्नाम[13] [13]माणविका दुहिताभूत्। सा एतर्हि

1 Tib adds सुवर्ण-। 2 Tib *mnon. par. dad. cin.* 3 Tib उदग्र-। Mss read the following line as : उदकेनासौ कन्यकामनुप्रदासीद्। इयमस्तु कन्यका प्रकृतिः शार्दूलकर्णस्य भार्या ॥ Tib adds : उभौ हृष्टचित्तौ रमेतां। Tib omits उदग्रचित्त-। 4 Tib omits आश्र-। 5 Tib omits. 6 Tib adds यशसा। 7 Tib रक्षति। 8 Tib omits this *pāda*. 1-8 Ch[2] translates these passages fairly literally. Ch[1] omits them. It reads : " 'Now I will marry my daughter to your son. You need not offer any gift or riches'. Having heard this, all the Brāhmaṇas got angry and said, 'Why do you marry your daughter to this low and mean fellow?' The Brāhmaṇa said to his disciples, '*Dharma* has only one form and not two. All are equal. You should not have arrogance in your mind'. Then he said to Triśaṅku, 'You may accept water ( as is the custom in marriage-ceremony ). I shall offer my daughter'. After the marriage, Mātaṅgarāja went away gladly". 10 P omits this sentence. 9-11 Ch[2] omits these sentences. 12 B adds दारिका and omits दुहिता। 13 Tib omits. B -र्नाम दारिका माणविकाभूत्।

तेनैव[1] स्नेहेन तेनैव प्रेम्णाऽ[2] नन्दं भिक्षुं गच्छन्तमनुगच्छति तिष्ठन्तमनुतिष्ठति। यद्यदेव कुलं पिण्डाय प्रविशति तत्र तत्रैव द्वारे तूष्णींभूताऽस्थात्।

अथ खलु भगवानेतस्मिन्निदाने एतस्मिन् प्रकरणे तस्यां वेलायामिमां गाथामभाषत।

पूर्वकेण निवासेन प्रत्युत्पन्नेन तेन च।
एतेन जायते प्रेम चन्द्रस्य[3] कुमुदे यथा[4] ॥

तस्मात्तर्हि भिक्षवोऽनभिसमितानां चतुर्णामार्यसत्यानामभिसमयाय, अधिमात्रं[5] वीर्यं[6] तीव्रच्छन्दो वीर्यं[7] शब्दापयामि[8]। उत्साह उन्नति[9] रप्रतिवाणिः स्मृत्या संप्रजन्येन[10] अप्रमादतो[11] योगः करणीयः। द्रुतम्[12] एषां चतुर्णां दुःखस्यार्य[13]-सत्यस्य दुःखसमुदयस्य निरोधस्य[14] निरोधगामिन्याः प्रतिपद आर्यसत्यस्य[15] अमीषां चतुर्णामार्यसत्यानामनभिसमितानामभिसमयायाधिमात्रं तीव्रच्छन्दो वीर्यं व्यायाम[16] उत्साह उन्नतिर[17]प्रतिवाणिः[18] स्मृत्या संप्रजन्येनाप्रमादतो[19] योगः करणीयः।

---

1-2 Tib *gcugs. pa. dan. mdza'a. ba'i. rgyus. da. ltar* 3 Tib omits. 4 Ch कुमुदस्य यथा जले। 1-4 Ch[1] reads: "As they were husband and wife in the former life their love has not yet ceased; so she (or they) followed". 5 Tib *mnon. par. 'bad. pa.* 6, 7 Mss बीजं। 7-8 Tib omits. 9 Mss -इन्यु( P न्यू )ति। Tib omits उन्नति। 10 Mss -जन्यन। Tib *ses. bshin. gyis.* 11 P अप्रमादता। B -मातो। Tib omits it. 12 Tib omits it. 13 Mss -स्यायं। 14 Mss omit. 15 Tib reads this sentence thus: कानि चत्वारि आर्यसत्यानि। दुःखं दुःखमार्यसत्यं। दुःखं [ दुःख- ] समुदय आर्यसत्यं। दुःखं [दुःख-] निरोध आर्यसत्यं। दुःखं [ दुःखनिरोध- ] मार्ग आर्यसत्यं। 16 Mss -र्ये व्यायामः Tib omits व्या-। 17 Tib omits उन्नति। Mss -इन्युचि-। 18 Tib adds here: *rtogs. par. bya.* 19 Tib omits अप्र-। P -माद्योगः। Ch[2] translates this paragraph as: "O monks, therefore, you should learn the *dharma* of the Four Noble Truths and repeatedly reflect on them. You should have delight in the *sūtras* and aspiration for the *Dharma*. Let not the mind go astray. Peacefully cultivate Tranquillity.

"A man whose head is burning in fire hurriedly attempts to extinguish it; in a similar way, the practitioner of the Four Noble Truths, should hurry up and cultivate Energy (*vīrya*)

अस्मिंश्च खलु पुनर्धर्मपर्याये भाष्यमाणे भिक्षूणां[1] षष्टिमात्राणामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि । संबहुलानां श्रावकाणां ब्रह्मणां[2] गृहपतीनां[3] च विरजस्कं विगतमलं धर्मचक्षुरुत्पादि[4] विशुद्धं[5] ।

इदमवोचद् भगवान्[6] । आत्तमनसस्ते भिक्षवो [7]भगवतो भाषितमभ्यनन्दन्[8] । इति श्रीदिव्यावदाने[9] शार्दूलकर्णावदानं[10] ॥

---

and get rid of lethargy. What are the Four Noble Truths? (i) Suffering (ii) the Origin of Suffering (iii) Cessation of Suffering (iv) and the Way (that leads to the Cessation of Suffering). You should aspire for and be delighted in them. Practise them tirelessly. Discriminate their meaning and advance quickly. Then you will attain Perfection (*Pāramitā*).

Buddha related this *sūtra* when He was in the city of Śrāvastī. Innumerable Brāhmaṇas and house-holders (ब्राह्मणगृहपतयः) were freed from defilements. All attained the *dharmacakṣus* (*lit.* सर्वेषां धर्मचक्षुरुत्पादि). The Bhikṣus got their mind absolutely freed from *āsrava* (आस्रवेभ्यश्चित्तानि अशेषतो विमुक्तानि).

1 Mss omit. 2 =ब्राह्मणानां (Tib & Ch). 3 B सहा- । 1-3 P omits from मात्राणा.........गृह । 4 Mss omit. P adds धर्मेषु before धर्मचक्षु- । 5 Tib omits. 6 Tib omits this sentence. 7 Tib adds here : राजा प्रसेनजित् कौशलः संबहुलाश्च श्रावका ब्राह्मणगृहपतयो देवा नागा यक्षा असुराः पन्नगाः किन्नरा महोरगा गन्धर्वाश्च सर्वे लोका- । 8 Ch[2] एवं भाषमाणे भगवति राज्ञः प्रसेनजितश्चित्तं प्रमुदितं प्रहर्षितमभूत् । ब्राह्मणगृहपतयो भिक्षवश्च भगवन्तमभ्यवन्दन्त । Ch[1] reads : "When this *sūtra* was related sixty Bhikṣus were freed from defilements. They became Arhats. The Brāhmaṇas got the purified 'eye of wisdom' (धर्मचक्षुर्विशुद्धं)". After this it reads : इदमवोचद् भगवान् । राजा प्रसेनजिद् भिक्षुभिक्षुण्युपासकोपासिकाश्च (भगवतो भाषितं) अभ्यनन्दन् (*lit.* "gladly accepted and followed it". Or "gladly obeyed his teachings, and acted accordingly"). 9 Tib omits दिव्यावदाने । B reads : शार्दूलकर्णावदानं दिव्यावदानोद्धृतं समाप्तं । 10 B adds : ये धर्मा हेतुप्रभवा हेतुस्तेषां तथागतः ।

# THE SUTRA OF THE MĀTAṄGA GIRL AS SPOKEN BY BUDDHA

## TRANSLATED BY AN SHI-KAO ( A. D. 148-70 )

Thus[1] I have heard : Once while Buddha was living in Śrāvastī in the garden *Jetavana* of Anāṭhapiṇḍada, Ānanda with his bowl was begging food.

After taking his meal[2] he went on by the bank of a stream. There he saw a girl passing carrying water. Ānanda begged water of her. The girl having given him water followed him and saw the place where he lived.

Then the girl went home and told this to her mother who was a *Mātaṅgī*[3] ( an untouchable ). The girl lay ḍown on the floor and wept. The mother asked her why she was weeping. The girl said, "Mother, if you want to marry me, marry me to none else but him. He is a *Śramaṇa*. I saw him by the bank of the river where he begged water of me ! I enquired and came to know his name to be Ānanda. If I have him I will marry ; if I cannot have him,[4] I will not marry".

The mother went out to enquire about Ānanda and came to know that he was a follower of Buddha. She returned home and said to her daughter, "Ānanda is a disciple of Buddha. He is not willing to be your husband".

At this the girl began to weep and refused to take food. She said to the mother, "Mother, you are versed in charm. Why don't you use it to persuade him ?"[5]

The mother went out and invited Ānanda to take meal ( in her house ). The girl was very glad. The mother said to Ānanda, "My daughter wishes to be your wife". Ānanda

---

1 Ch4 omits this sentence. 2 Ch4 omits this part. 3 Ch3 , Ch4 : "Who was named *Mātaṅgī*". 4 Ch3 "If mother cannot..." 5 Ch3 omits this sentence.

said, "I observe *Sīla* and ( so ) cannot have a wife". The mother said, "If my daughter cannot have you as her husband, she will commit suicide".

Ānanda said, "I am a disciple of Buddha ; I cannot have contact with women". At this, the mother entered ( into the inner apartment ) to inform her daughter that Ānanda was not willing to be her husband, that he is a follower of Buddha ( *lit. sūtra-dharma* ) and cannot have a wife. The daughter wept and said to the mother, "Where is your Law (charm) ?" The mother said,"There is no such Law in the world which can overcome the Law of Buddha and Arhat". The daughter of the *Mātaṅgī* said, "Close the door and don't allow him to go out. When it will be night, he will naturally become my husband".

The mother closed the doors and bound Ānanda by charm. As it was dark, the mother arranged the bed for her daughter. The girl was very happy. She decorated herself. Ānanda of course did not wish to go to her bed.

Then the mother ( by charm ) ordered the earth to bring forth fire in the middle of the courtyard.[1] She approached it, dragging Ānanda by his robe and said, "If you are unwilling to be the husband of my daughter, I shall throw you into the fire". Ānanda thought that in spite of his being a *Sramaṇa* of Buddha's Order, he was still under its ( witchery's ) influence. He could not rescue himself. With folded hands he cried for ( the help of ) Buddha.[2] Buddha immediately knew it.[3] He used His spiritual force and rescued Ānanda.[4]

Ānanda returned to Buddha and said, "Yesterday while I was begging food, by the bank of a stream, I saw a girl and begged water of her. After that I returned to the abode of the Lord.[5] Next day a woman who was a *Mātaṅgī* came and invited me for food. When I was coming back, she caught me wishing

---

1 Ch4 : "The mother lit a fire". 2 Ch3 omits this sentence. 3-4 Ch3 : "Buddha was in meditation. He knew ( the condition of ) Ānanda". 5 Ch4 omits this sentence.

to give me her daughter as wife. I told her that I was observing Buddha's *Śīla* and could not have a wife".

Now when the ( *Mātaṅga* ) girl saw that Ānanda had escaped, she cried aloud. The mother said, "My Law has no power to overcome them who follow Buddha's teachings. Did I not tell this before ?"

But the girl kept on weeping and thinking of Ānanda. Next day she went herself in search of Ānanda. She found him begging food and followed him. She gazed at Ānanda from top to toe. Ānanda feeling ashamed tried to avoid her, but the girl continually followed him.[1]

Ānanda returned to the resting place of Buddha. The girl watched at the door. As Ānanda did not come out, the girl wept and went away.

Ānanda told Buddha that the *Mātaṅga* girl followed him again on that day.[2] Buddha sent for the girl. When she came, He asked her, "Why do you pursue Ānanda ? What do you want ?"

The girl said, "I hear that Ānanda has no wife, I too have no husband and so I wish to be his wife".

Buddha said, "Ānanda is a *Śramaṇa*. He has no hair. But you have hair[3] . If you are willing to shave your head, I shall make Ānanda your husband". The girl replied, "I can shave my head".

Buddha said, "Then you go back and tell this to your mother, shave your head and come."

The girl went back and said to her mother, "Mother, you could not bring Ānanda for me.[4] Buddha said to me, "Shave your head and come back, and I will make Ānanda your husband". The mother said, "My child, you are born of me and should keep your hair. Why should you choose a

1 Ch4 : "Ānanda was ashamed. He hang down his head and did not see her". 2 Ch4 adds : "Next day again she would come". 3 Ch4 omits this sentence. 4 Ch4 adds : "I myself went and asked Buddha".

*Śramaṇa* as your husband ? There are so many big and rich men in the country ; I can marry you to one of these persons". The girl said, "Whether I live or die, I must be the wife of Ānanda". The mother said, "Why do you disgrace our caste ?" The girl said, "Mother, if you love me, you should allow me to do what I wish". The mother, while weeping took a razor and shaved the head of her daughter.

The girl went to Buddha and said, "I have already shaved my hair". Buddha said, "You love Ānanda, but which part of his body do you love ?" The girl replied, "I love Ānanda's eyes, I love his nose, I love his mouth, ear[1] and voice, I love his gait". Buddha said, "In his eyes, there are tears, there are excretions in the nose, spittle in the mouth, wax in the ear. In the body there are stools, urine and all impure things. When persons are coupled in marriage, dirty substance is excreted and from that excretion a child is born. Now when there is birth there is death. If there is death, then there must be grief and lamentation. Then, what do you gain from the body ( that you love ) ?"

The girl reflected on this. Afterwards she saw ( with her mental eyes ) all the impurities in the body. Thus her mind was enlightened. She attained the Path of Arhat.

When Buddha came to know that[2] she had attained the Path of Arhat, He told her, "Now you can go to Ānanda's place". The girl in great shame hang down her head. She bowed down before Buddha and said, "Out of my foolishness, I pursued Ānanda. Now my mind is awakened just as a lamp in darkness. I am like one who has reached the shore after shipwreck. I am like an old or blindman who got a stick to help him. O Lord Buddha ! Today You have given me the Law and made my mind awakened !"

---

1 Ch4 omits "ear". 2 Ch4 omits : "Buddha came to know that".

All the Bhikṣus asked Buddha, "The girl's mother practises witchery, how did she attain the Way of Arhat ?" Buddha asked the Bhikṣus, "Do you want to hear something about this girl ?" The Bhikṣus replied, "We shall be glad to hear". Buddha said, "This *Mātaṅga* girl in her five hundred former lives, was the wife of Ānanda. During all their five hundred former lives, both of them loved and respected each other. Now, both of them attain the Way in my *Śāsana*. Now, this couple meet together as brother and sister. Such is the Law of Buddha.[1] Why should it not be practised ?"[2]

Buddha preached this *Sūtra* and having heard this all the Bhikṣus were delighted.[3]

1-2 Ch4 "This *Sūtra* thus made the mind of the girl known to the *Śramaṇas*". 3 Ch4 "*Śramaṇas* got up from their seats and made salutation to Buddha".

# NOTES

| *page* | *line* | *footnote* | Explanation, textual criticism & corrections |
|---|---|---|---|
| 1 | 11 | | *sa cet* if ; cf. Pali *sa ce.* |
| ” | ” | | *parityakta pānīya* water to spare. |
| ” | last | | *nimittam udgrah* to make something ( here body etc. ) the object of a thought. |
| | | | *udgr̥hītvā, pravrājayitvā, saṃjanayitvā* such grammatically incorrect forms of gerund are found several times in the text. Such wrong use of gerund is seen in old works. For example: *upoṣitvā. Mahābhārata,* xiii. 136. 11. *nivartayitvā. Ibid* xiv. 52. 57. |
| ” | ” | | *yoniśo manasikāra* ( Pali expression ) “fixing one’s attention with a purpose or thoroughly”, proper attention. |
| 2 | 5 | | *śrāvaka* a hearer, disciple. |
| ” | 6 | | *upasthāyaka* a personal attendant, servant, nurse. |
| ” | 15 | | *mā te putri jīvitam parityajasi.* The correct form should be......*parityākṣīh* ( or *-tyaja* ). |
| 3 | 9 | | *prajñapay* to lay down, spread ; cf. Pali *paññāpeti.* |
| ” | 14 | | समन्वाहृ to concentrate the mind, reflect ; cf. Pali *samannāharati.* |
| 4 | 9 | | समन्वाहृतो भविप्यति...प्रतिहृता भविष्यन्ति । Future tense is used here in place of potential and present. |
| ” | 17 | | उद्गृह्ण = -गृहाण to take up, acquire, learn ; cf. प्रतिगृह्ण मया दत्तं रत्नमेतत् सुदुर्लभम् । *Rāmāyaṇa,* iii. 9. 27. . |
| ” | 18 | | पर्यवाप् to learn by heart, master ; cf. Pali *pariyāpuṇāti.* |
| ” | 21 | | एतर्हि at present. |
| ” | | 7 | Read : ‘*sahampati*’ for *sahāmpati.* |

